भारोल्लसत्परिसरः स्तनयोस्तटोऽय-
माभाति भूभृदिव निर्झरभासुरश्रीः।
तत्तादृशी च कबरी निबिरीसबद्धा
मुक्ताश्रिता जयति तारकिता निशेव ॥ २५॥

अपि च,

परिपाकः किमु तपसां परिणामः किन्तु भागधेयानाम्।
फलमेव किं दृशोर्नः पङ्कजनयना पुरः स्फुरति ॥ २६ ॥
(इति सविस्मयस्तिमितनयनं पश्यति।)

सारसिका— (सप्रश्रयमञ्जलिं बद्ध्वा) आमन्तेमि रत्तासोअ! तुमं। जस्स तुह छायाए आमोदेण वि एत्तिअं काळं संतप्पिदं ह्मि। [आमन्त्रये रक्तशोक! त्वाम्, यस्य तव छायया आमोदेनापि एतावन्तं कालं सन्तर्पितास्मि।]

राजा— हन्त! मामियं व्याजादापृच्छते।

सारसिका— सहि! दीहासीआए ऊरुत्थम्भो विअ मे। ता सणिअं गच्छह्म। (इति सख्याञ्जं विलम्ब्य कलावत्या सह निष्क्रान्ता।) [सखि! दीर्घासिकया ऊरुस्तम्भ इव मे। तच्छनैर्गच्छावः।]

राजा— (सानुशयम्) अहो! तिरोहिता नयनचन्द्रिका। तदिदानीं किं करोमि। (विचिन्त्य सनिःश्वासम्) का नाम कर्तव्यता। सर्वथा तामलभमानस्य मम हृदयं न क्षणमपि निर्वृणुते। तत् किमिदानीमभ्युपायः। (विमर्शं नाटयन्) न किञ्चिदुपलभे। (सधैर्यावष्टम्भं) अथवा कृतमनया चिन्तया। कुतः,

आयस्यद्भिरमीभिः किं वा कुशलः प्रसाध्यते बुद्ध्या।
अनुकूला यदि नियतिः सैवोपायं यतेत नियतफले ॥ २७॥
(निष्क्रान्तः)

द्वितीयोऽङ्कः ॥

---

१. 'जत्थ' ख.　　२. 'वि अ ए' ख.

# अथ तृतीयोऽङ्कः

[ ततः प्रविशतश्चेट्यौ । ]

एका— मुहरिए ! कहिं तुरिअं गच्छसि । (मुखरिके ! कुत्र त्वरितं गच्छसि ।)

मुखरिका— (विलोक्य) कहं चउरिआ । (कथं चतुरिका ।)

चतुरिका— किं महन्तं विअ कज्जं दीसइ । (किं महदिव कार्यं दृश्यते ।)

मुखरिका— अह इं । (अथ किम ।)

चतुरिका— किं तं भणाहि । (किं तद् भण ।)

मुखरिका— अज्ज महाणवमीम्मि भअवदिं चण्डिअं सविसेसं अच्चिदुकामाए देवीए आणत्त ह्मि । (अद्य महानवम्यां भगवतीं चण्डिकां सविशेषमार्चितुकामया देव्या आज्ञप्तास्मि ।)

चतुरिका— कहं विअ । (कथमिव ।)

मुखरिका— जह एकस्सिं मण्डवे दुवेहिं देवदाए पूआ ण कादव्वे त्ति आअमिआ आमणंति त्ति भअवदी लोअपावणी[1] जोइणी पिअसहीए मरुव्विहाए मुहादो अणुसासिदवदी[2] । ता अहं भट्टिणो कुसुमाअरुज्जाणे सपज्जं करेमि । तुमं उण मह वसंतुज्जाणे एव्व करेहि त्ति भणिअ सारसिअं कळावदीए समं वसन्तुज्जाणं पत्थावेहि

---

१. 'पावणी,' २. 'दी किल । ता भ' ख.

त्ति। ( यथा एकस्मिन् मण्डपे द्वाभ्यां देवतायाः पूजा न कर्तव्येति आगमिका आमनन्तीति भगवती लोकपाविनी योगिनी प्रियसख्या मरुद्विधाया मुखादनुशासितवती, तस्मादहं भर्तुः कुसुमाकरोद्याने सपर्यां करोमि। एवं पुनः मम वसन्तोद्याने एव कुर्विति भणित्वा सारसिकां कलावत्या समं वसन्तोद्यानं प्रस्थापयेति।)

चतुरिका— कहं उवक्कन्ताए णवरत्तपूआए अज्ज विच्छेदो। (कथम् उपक्रान्ताया नवरात्रपूजाया अद्य विच्छेदः।)

मुखरिका — णहि[1]। अज्ज क्खु पहादे णिच्चपूआ तहिं एव्व मण्डवे ताहिं किदा। अज्ज उण मज्झह्न[2]महापूआए देसभेदो। (नहि। अद्य खलु प्रभाते नित्यपूजा तत्रैव मण्डपे ताभ्यां कृता। अद्य पुनर्मध्याह्नमहापूजाया देशभेदः।)

चतुरिका— (विमृश्य सस्मितम्) किं मणम्मि काऊण किं वि उवक्कमन्ति सुहुमदिणो। (किं मनसि कृत्वा किमप्युपक्रामान्ति सूक्ष्ममतयः।)

मुखरिका — अत्थु। ता किं एत्थ। (अस्तु। तत् किमत्र।)

चतुरिका— न किंवि। (न किमपि।)

मुखरिका — किं मह वि णिगूहिज्जइ। (किं ममापि निगूहसि।)

चतुरिका — (सचकितं परितः पश्यति।) ण किं वि अण्णं, जाणासि क्खु महाराअणअणपहादो सारसिअं देवी रक्खदि[3] त्ति। (न किमप्यन्यत्। जानासि खलु महाराजनयनपथात् सारसिकां देवी रक्षतीति।)

१. 'णहि णहि' ख. २. 'ह्न म', ३. रक्खिस्सदि' ख.

मुखरिका— (साभ्युपगमं) विदिदं एव्व एदं णिहिळस्स वि अन्तेउरपरिअणस्स । अदो क्खु सा पूओवक्कमदिअहे वि सिंगारसरम्मि गोपाइदा । तदो किं । ( विदितमेवेदं निखिलस्याप्यन्तःपुरपरिजनस्य । अतः खलु सा पूजोपक्रमदिवसेऽपि शृङ्गारसरसि गोपायिता । ततः किम् । )

चतुरिका— तस्सिं एव्व दिअहे दक्खाअणो वाअणं खेत्तूण बह्मणत्तणसुळहाए खुहाए पीडिज्जंतो मोदअखंडआइं खादिदुं सळिळत्थिद एव्व सरं पत्थिदो । (तस्मिन्नेव दिवसे दाक्षायण उपायनं गृहीत्वा ब्राह्मणत्वसुलभया क्षुधया पीड्यमानो मोदकखण्डकानि खादितुं सलिलस्थित एव सरः प्रस्थितः । )

मुखरिका— अहो पमादो[1] । (अहो प्रमादः ।)

चतुरिका— एदं तदा पूआसम्भमेण मए ण जाणिदं । (एतत् तदा पूजासम्भ्रमेण मया न ज्ञातम् । )

मुखरिका— तदो तदो । ( ततस्ततः । )

चतुरिका— [2]दिट्ठिआ समावत्तिदिट्ठवतीए कळावदीए पडिणिवट्टिदो । ( दिष्ट्या समापत्तिदृष्टवत्या कलावत्या प्रतिनिवर्तितः ।)

मुखरिका — ( विमृश्य सस्मितम् ) मएवि दाणिं जाणिदं- " प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम् " त्ति णाएण महापूआअं भट्टिणो सण्णिहाणं एव्व ताए परिहरिदुं एसो उवक्कमो त्ति । ( मयापीदानीं ज्ञातम्– इति न्यायेन महापूजायां भर्तुः सन्निधानमेव तया परिहर्तुम् एष उपक्रम इति । )

---

१. 'दो अहो पमादो' ख, घ. २ 'तदो दि' ख, घ.

चतुरिका— (सशिरःकम्पं) आम सहि। (आम सखि!)

मुखरिका - अह्मो ! देवीए अणाअदविहाणचाउरी। (अहो ! देव्या अनागतविधानचातुरी।)

चतुरिका— मुद्धे ! ण पेक्खसि संविहाणस्स सुस्सिळिट्ठत्तण। जं सअं एव्व कुसुमाअरुज्जाणगमणेण भत्तुणो परितोसणं। णिअवसंतुज्जाणसमप्पणेण सारसिआए सम्माणणं। विमरिसे उण महाराआदो ताए रक्खणं त्ति। (मुग्धे ! न पश्यसि संविधानस्य सुश्लिष्टत्वम्। यत् स्वयमेव कुसुमाकरोद्यानगमनेन भर्तुः परितोषणम्। निजवसन्तोद्यानसमर्पणेन सारसिकायाः सम्माननम्। विमृशामि पुनर्महाराजात् तस्या रक्षणम् इति।)

मुखरिका— एव्वं एदं। तुमं उण कहिं पत्थिदा। (एवमेतत्। त्वं पुनः कुत्र प्रस्थिता।)



चतुरिका— (सस्मितम्) अज्ज महापूआअं कुसुमाअरुज्जाणे महाराएण सण्णिहादव्वं त्ति भणिदुं देवीए पेसिदं ह्मि। (अद्य महापूजायां कुसुमाकरोद्याने महाराजेन सन्निधातव्यमिति भणितुं देव्या प्रेषितास्मि।)

मुखरिका— अहिमदणिओएसु अब्भन्तरा खु तुमं देवीए। ता तुरिदं गच्छ। अहं वि जहाणिओअं अणुचिट्ठामि। (अभिमतनियोगेष्वभ्यन्तरा खलु त्वं देव्याः। तत् त्वरितं गच्छ। अहमपि यथानियोगमनुतिष्ठामि।)

[निष्क्रान्ते]

प्रवेशकः।

---

१. 'सहि आम सहि' ख. २. 'आणासि'

[ ततः प्रविशति चिन्तां नाटयन्नासीनः पर्युत्सुको राजा, तिष्ठन् विदूषकश्च । ]

विदूषकः— ( स्वगतम् ) कहं उवट्ठिदं वि मं एसो ण पेक्खदि । (कथमुपस्थितमपि मामेष न प्रेक्षते । )

राजा— ( दीर्घमुष्णं च निःश्वस्य ) कथं प्रत्यापत्तिविधुर एव मे मनसो महानभिनिवेशः । यतः,

व्याक्षिप्तापि निरन्तरैर्वसुमतीसंरक्षणप्रक्रमै-
    र्व्यासङ्गैरभिभाविताषि खुरलीकेलीविलोकादिभिः ।
आलापैरवधीरितापि सुहृदामुच्चावचैः प्रेयसा-
    मम्लानप्रकृतिश्चिराय विकृतिः काप्युज्जिहीते मम ॥ १ ॥

विदूषकः— ( स्वगतम् ) बळिअं खु से हिअआवक्खेवो । होदु । वड्ढावइस्सं । ( प्रकाशम् ) जेदु पिअवअस्सो । (बलीयान् खल्वस्य हृदयावक्षेपः । भवतु । वर्धापयिष्ये । जयतु प्रियवयस्यः । )

राजा— (अश्रुतिमभिनीय)

मन्दाक्षसंहृतविकस्वरदृष्टिपातं
    मन्दस्मितस्नपितकर्बुरिताधरोष्ठम् ।
मामेव सप्रणयमीषदपाङ्गयन्त्या
    वक्त्रारविन्दमरविन्ददृशः स्मरामि ॥ २ ॥

विदूषकः— कहं ताए वि तुमं दिट्ठोऽसि । (कथं तयापि त्वं दृष्टोऽसि । )

राजा— (पुनरश्रुतिमभिनीय पुलकोद्भेदं रूपयन् ) नेतः परमुचितो

निर्गूहितुमात्मन्यव हृदयावस्कन्दः । तदद्य दाक्षायणाय प्रियसुहृदे निखिलमपि वृत्तान्तं निवेद्य केवलं निर्वृणोमि ।

विदूषकः— (स्वगतम्) सुणुमो दाव । (शृणुमस्तावत् ।)

राजा— अथवा किमस्य निवेदितेन । कुतः,

विवृद्धस्याभिलाषस्य विषयावाप्तिमन्तरा ।
मित्रावेदनमात्रेण मिथ्या चिन्तापरिक्षयः ॥ ३ ॥

(विमृश्य) सोऽपि[1] दाक्षायणाधीन एव[2] । तदेनं प्रतीक्षे । (पुरः पश्यन् दाक्षायणं दृष्ट्वा सविस्मयम्[3]) कथं सखे ! स्मरणसमनन्तरमेव सन्निहितोऽसि ।

विदूषकः— (सोत्प्रशम्) णं मुहुत्तादो आरहिअ एत्थ एव्व चिट्ठेमि । (ननु मुहूर्तादारभ्य अत्रैव तिष्ठामि ।)

राजा— (निःश्वस्य)

दृष्टिः सम्प्रति सन्निकृष्टविषयानप्यक्षमा वीक्षितुं

विदूषकः— ण केवलं ठिदो ह्मि वड्ढाविदो तुमं ।
(न केवलं स्थितोऽस्मि वर्धापितस्त्वाम् ।)

राजा—

कर्णाभ्यर्णचरीं ग्रहीतुमपि वा वाचं न मे चातुरी

विदूषकः— (सविस्मयम्) किं वि पुच्छिदं वि मए ।
(किमपि पृष्टमपि मया ।)

राजा— किं तत् ।

---

१. 'सापि,' २. 'नैव', ३. 'सहर्षवि', ४. 'सस्मितम्' ख.

विदूषकः— कहं ताए वि तुमं दिट्ठोऽसि त्ति । (कथं तयापि त्वं दृष्टोऽसीति ।)

राजा— (स्वगतम्) किं तदपि श्रुतमनेन यद् 'अपाङ्गयन्त्या वक्रारविन्दमरविन्ददृशः स्मरामी' ति मयाभिहितम् । (प्रकाशम्) सखे! किं करोमि ।

प्रत्युक्तिः परिपृच्छतेऽपि सुहृदे नोद्गच्छति त्वादृशे

विदूषकः— कुदो एदं । (कुत एतत् ।)

राजा—

व्यावर्तुं क्षमते मनो नहि मयाक्रान्तं मुहुश्चिन्तया ॥ ४ ॥

विदूषकः— कहं तुह्माणं मिहो दंसणं । (कथं युवयोर्मिथो दर्शनम् ।)

राजा— (सनिःश्वासम्) सखे! तवापि निवेदयामि, (इति विदूषकं हस्ते गृहीत्वा समीपे निवेश्य कर्णे 'एवमिव'। )

विदूषकः— (सहर्षस्मितम्) कहं पवामण्डाविअं वि आसादिअ परिस्समासि । (प्रपामण्डपिकामप्यासाद्य परिश्राम्यसि ।)

राजा— कुत एवं वदसि ।

विदूषकः— जदो एत्तिअम्मि वि ताए अणुराँअस्स कज्ज-सिद्धिम्मि तुह अणासासो । (यत इयत्यामपि तस्या अनुरागस्य कार्यसिद्धौ तवानाश्वासः ।)

राजा— कथमाश्वसिमि विना तत्प्राप्त्युपायम् । स च त्वाय साम्प्रतमायतते ।

---

१. 'मम श्रान्तं मु' घ, 'बहु श्रान्तं मु' ख. २. 'वावे' ख. वायं निवे' घ.
३. 'राए कज्ज' ख. ४. 'माश्वासो विना' ख.

विदू— (स्वगतम्) किं दक्खाअणस्स सोक्खस्स तुए सारसिआ दिट्ठा। (किं दाक्षायणस्य सौख्यस्य त्वया सारसिका दृष्टा।) (प्रकाशम्, विमृश्य) महंतो विअ पडिबन्धो पडिहाइ। (महानिव प्रतिबन्धः प्रतिभाति।)

राजा— क इव।

विदूषकः— देवी एव्व। (देव्येव।)

राजा— कथमिव।

विदूषकः— सा खु तुह णअणपहादो णं गोवाअदि विअ। (सा खलु तव नयनपथादेनां गोपायतीव।)

राजा— (स्वगतम्) कथमनेनापि मयेवोन्नीतम्। (प्रकाशम्) कथमनाशङ्कनीयमाशङ्कसे। साधीयान् खलु मयि विस्रम्भो देव्याः।

विदूषकः— ता किं त्ति ण णिवेदिआ तुह सारसिआ। (तत् किमिति न निवेदिता तव सारसिका।)

राजा— (सावज्ञम्) किमन्तःपुरवृत्तान्तो निखिलोऽस्माकं निवेद्यते।

विदूषकः— ता कीस तुए ण दिट्ठा।
(तत् कस्मात् त्वया न दृष्टा।)

राजा— प्रजापरिपालनव्यासक्तानामस्माकमिदम् अनाशङ्कनीयमेव।

विदूषकः— होदु। पूओवक्कमादिअहे तुह णिग्गमणाणन्तरं

किं त्ति दुदीआ सामग्गी सण्णिहाविदा । (भवतु । पूजोपक्रमदिवसे तव निर्गमनानन्तरं किमिति द्वितीया सामग्री सन्निधापिता । )

राजा— पुनःपूजायै सा भवतु । तदन्यथासिद्धं प्रमाणम् । अन्यदुपन्यस्यताम् ।

विदूषकः— होदु । एव्वं एदं । इदं कहं परिहरिस्ससि । ( भवतु । एवमेतत् । इदं कथं परिहरिष्यसि । )

राजा— किं तत् ।

विदूषकः— जं सिंगाररसं उवसरंतो दासीएसुदाए कळावदीए अहं[1] णिरुद्धिदो । (यत्, शृङ्गाररस उपसरन् दास्याः सुतया कलावत्या अहं निरोधितः । )

राजा— ( सविमर्शं[2] स्वगतम् )

एतामुदीक्ष्य दयितो[3] नलिनायतक्षी-
मव्याजसुन्दरमनोहरकोमलाङ्गीम् ।
नूनं समेष्यति मनोभवशिष्यभाव-[4]
मित्येव निश्चितवती दयिता कथं माम् ॥ ५ ॥

(प्रकाशम्) प्रकृतविरोधिन्यपि स्पृहणीया खलु मादृशामपि देव्या नीतिः । तदेवं सत्युचित एवायमिह ममापि संरम्भः ।

विदूषकः— को संदेहो । ( कः सन्देहः । )

राजा— कथमीदृशेऽपि सति देव्युपक्रमे यतामहे ।

विदूषकः— होदु । को दोसो । पुरुसेहिं जण्णो करणिज्जो

---

१. 'अहिणि' ङ. २. '(विमृश्य सस्मितम् ) सखे ! संवदतीव तव तर्कः । विदूषकः- (साटोपं) संवददि एव्व त्ति भणाहि । राजा- ( सवि' ख. ३. 'तां न' क. ४. 'वचित्तभा' ख, 'तविधिवि' ख, घ.

एव्व । कज्जसिद्धी उण देव्वस्स करे ठिदा । (भवतु, को दोषः। पुरुषैर्यत्नः करणीय एव । कार्यसिद्धिः पुनः दैवस्य करे स्थिता । )

राजा — तर्हि त्वमिह चिन्तयोपायम्।

(विदूषकः चिन्तां नाटयति । )

राजा— (सनिःश्वासम् )

त्रैलोक्यदुर्लभमनोहररूपधेय-
मत्यद्भुतं किमपि वस्तु पुरः प्रदर्श्य ।
आपाद्य रागमविधाय कमप्युपाय-
माः ! क्रीडतीव कृतिनी नियतिः स्वतन्त्रा ॥ ६ ॥

तदत्र पुरुषकारस्य प्रसरमेव न पश्यामः ।

विदूषकः— (सहर्षं) मह उवाओ फुरिओ । (ममोपायः स्फुरितः । )

राजा— कथमिव[1] ।

विदूषकः— अज्ज महापूआवसरे भवं[2] देवीए णिम्मन्तइस्सदि[3] । (अद्य महापूजावसरे भवान् देव्या निमन्त्रयिष्यते । )

राजा— (साधिक्षेपम् ) कथं पूर्वोत्तरप्रतिषिद्धमेव जल्पसि ।

विदूषकः— किं एत्थ विप्पडिसिद्धं । ( किमत्र विप्रतिषिद्धम्। )

राजा— भवानेव परिभावयताम् ।

विदूषकः— (सविस्मितम्[4] ) किं एत्तिअं ण आणामि । किंतु

---

१. ‘कथय’ ख, घ. २. ‘भवंतं देवी णि’ ख. ३. ‘दि। राजा- प्रातरेव चतुरिकामुखादाहूतोऽस्मि। ततः किम्। विदूषकः- उज्जाणे संघडणं भविस्सदि। राजा- साधि’ ख. ४. ‘सस्मि’ ख.

देवीए णिह्नुदावि तहिं दिअहेवि कहं वि तुह णअणपहं गमिस्सदि। (किमेतावन्न जानामि। किन्तु देव्या निह्नुतापि तस्मिन् दिवसेऽपि कथमपि तव नयनपथं गमिष्यति।)

राजा— (दीर्घमुष्णं च निःश्वस्य) हन्त! सम्प्रति प्रतिभायाः प्रतिहतप्रसरतया नियतिमेव शरणयामहे। (साञ्जलिपुटम्)

दयया दर्शय दयितां परथा न वृथा क्षणं क्षमे वस्तुम्।
सुकृतं दुष्कृतमपि वा समयो मयि ते समार्जितुं नियते! ॥ ७॥

[नेपथ्ये]

दर्शयामि तामहमुद्याने।

राजा— (सविस्मयोल्लासम्) प्रतिवदतीव मे भगवत्येव नियतिः स्वयमनुकम्पया।

विदूषकः— (सप्रत्यभिज्ञं) तत्तहोदीए मरुव्विहाए विअ सरसंजोओ सुणीअदि। (तत्र भवत्या मरुद्विधाया इव स्वरसंयोगः श्रूयते।)

[पुनर्नेपथ्ये स्खलिताक्षरमिव]

तर्हि भवद्दयया देवीसकाशादेव प्रार्थितं लब्ध्वा कृतार्थो भवामि।

राजा – प्रतिजिघृक्षोर्जरठमाठरस्येदं वचनम्।

विदूषकः — णेणव्व दंसइदव्वा देवी त्ति पत्थिदाए मरुव्विहाए एदं वि पडिवअणं भविस्सदि (अनेनैव दर्शयितव्या देवीति प्रस्थिताया मरुद्विधाया इदमपि प्रतिवचनं भविष्यति।)

---

१. 'हे विअ' क, ७.

राजा— अथकिम् ।

विदूषकः— ता अह्मे वि उज्जाणं एव्व गच्छह्म जाव सारसिअं देवी ण णिगूहिस्सदि । (तदावामपि उद्यानमेव गाच्छावो यावत् सारासिकां देवी न निगूहिष्यति ।

राजा— गच्छाग्रतः ।

विदूषकः— इदो इदो भवं । (इत इतो भवान् ।)

[ उभौ परिक्रामतः ।]

राजा— (साशंसम् )

उत्कण्ठासमुदीरिताः प्रणयसम्प्रस्तावविस्तारिता
लज्जामन्थरिता भयादवहिता भूम्ना रसानां भृताः ।
निक्षिप्ता मयि ये निसर्गमधुरा नीलोत्पलाक्ष्या पुरा
भूयः सम्प्रति सम्पतेयुरपि ते मुग्धाः कटाक्षोर्मयः ॥ ८ ॥

(निःश्वस्य) सखे! क वयं प्रस्थिताः स्मः ।

विदूषकः— (स्वगतम् ) कहं उम्मादो विअ से लक्खीअदि । (प्रकाशम्) णं सअं एव्व उज्जाणप्पत्थाणं आणत्तिअ कहं पुच्छसि । (कथम् उन्माद इवास्य लक्ष्यते । ननु स्वयमेव उद्यानप्रस्थानम् आज्ञाप्य कथं पृच्छसि । )

राजा— (साभ्युपगमं ) आः ! प्रमुष्णाति मे स्मृतिमपि [1]चण्डिमा हृदयतापस्य ।

विदूषकः— एदं वसंतुज्जाणं । जाव पविसामो । ( इदं वसन्तोद्यानम् । यावत् प्रविशावः । )

---

१. 'प्रच' ख.

[ उद्यानप्रवेशं रूपयतः । ]

राजा— ( पुरोऽवलोक्य )

परिचितमाळिनो विहाय नीपं
बत विकसन्तमयन्ति बन्धुजीवम् ।

अथवा,

न भवति चपलेषु चित्रमेत-
न्ननु निखिलोऽपि कुतूहली नवेषु ॥ ९ ॥

विदूषकः— णं तत्तभवं एव्व एत्थ णिदंसणं । ( ननु तत्रभवानेवात्र निदर्शनम् । )

राजा— कथं न काचिदत्र ।

विदूषकः— ( साशङ्कं ) जाव मणिमंडवं एव्व गदुअ जाणामो (यावन्मणिमण्डपमेव गत्वा जानीवः । )

[ प्रवेशं रूपयतः । ]

विदूषकः— सपज्जासम्भारा एत्थ केवलं दीसंति । (सपर्यासम्भारा अत्र केवलं दृश्यन्ते । )

राजा— कुतो देवी विलम्बते ।

विदूषकः ण आणीअदि । ( न ज्ञायते । )

राजा— भवतु तस्मिन्[1] विविक्ते प्रेयसीविरहपरवशमात्मानं विनोदयामि ।

विदूषकः— अप्पमत्तो होहि । देवीपरिअणो खु सञ्चरिस्सदि ।

---

१. 'तदस्मिन्' ख.

( अप्रमत्तो भव । देवीपरिजनः खलु सञ्चरिष्यति । )

राजा— (सभ्रूभङ्गं ) दाक्षायण ! परितोऽपि पश्य । किमद्यापि। द्वितीया सपर्यासामग्री सन्निधापितेति ।

विदूषकः— जं भवं आणवेदि । (इति परितः पश्यन् परिक्रामन्नग्रतो विलोक्य सहर्षसम्भ्रमं निभृतपदक्रमं परावृत्य राजानं हस्ते गृहीत्वा त्वरितं नयमानः पुरोऽङ्गुल्या निर्दिशन् ) सखे ! पेक्ख पेक्ख । ( यद् भवानाज्ञापयति । सखे ! पश्य पश्य । )

राजा— ( सहर्षविस्मयं पश्यन् ) अहो पुनरिदानीं,

निष्यञ्जनौषधिं भूमौ खनन्निव निधिश्रियम् ।
अन्विष्यन्निव सामग्रीमासादयमहं प्रियाम् ॥ १० ॥

विदूषकः— वअस्स णं[1] पेक्खसि मह उवाअस्स अविसंवादित्तणं । ( वयस्य ! ननु पश्यसि मम उपायस्य अविसंवादित्वम् । )

राजा — किमद्यतनं तव प्रज्ञाकौशलम् । (पुनः सोल्लासं पुरः पश्यन्) सखे ! सञ्चारिणीमिव काञ्चनपाञ्चालिकां चिरविलासिनीमिव सौदामिनीं, उररीकृतकरचरणमुखावयवविभागामिव शशाङ्कलेखां, जङ्गमामिव मदनजयपताकां, अङ्गवतीमिव[2] शृङ्गारदेवताम् अपर्युषितयौवनोन्मेषरमणीयां वरवर्णिनीमेनां निर्वर्णयन् यत्सत्यं न पारयामि महान्तमानन्दाम्बुधिं तरितुम् ।

विदूषकः— एसा वि दासीएसुदा कळावदी मक्खिआ विअ महूलिआए इमाए समीवे दीसइ । ( एषापि दास्याः सुता कलावती मक्षिकेव मधूलिकाया अस्याः समीपे दृश्यते । )

---

१. 'ण' घ. २. 'भगव' क.

राजा— इयं खल्वस्याः प्रियसखी, तदनयोर्देव्या विना किमागमनकारणम् । भवतु । निभृतौ जानीवः । ( तथा कुरुतः । )

विदूषकः— पुप्फावचअव्वाउदाओ एदाओ दीसंति ।
( पुष्पावचयव्यापृते एते दृश्येते । )

राजा— तदेव किल पश्यन्नहं चक्षुषोः साफल्यमनुभवामि।

[ ततः प्रविशति पुष्पावचयं नाटयन्ती कलावत्या सह सारसिका । ]

सारसिका— सहि ! एदाइं अवचिणुस्सं । ( सखि ! एतान्यवचेष्यावः । )



राजा— ( विलोक्य स्वगतम् )

परिणतबिसकाण्डपाण्डराणि
प्रविसरदुल्बणतापजर्जराणि ।
विलुलितलवलीसहोदराणि
व्यतिविलसन्त इवाङ्गकानि तन्व्याः ॥ ११ ॥

तन्मन्ये मयीवास्यामपि पराक्रमते महावीरो मार इति । (प्रकाशम्) सखे ! पश्य । सम्प्रति-

उत्पक्ष्मलोचनमुदूढमणीकनास-
मुद्ग्रीवितानममुद्ग्रकुचद्वयोकम् ।
उद्भिन्नरोमलतिकावलिनाभिदेश-
मुच्चावचानि कुसुमानि लुनाति तन्वी ॥ १२ ॥

किञ्च,

समवचेतुमिहानमितः पुरः
स्तबक एष विभाति मृगीदृशा ।

अनुकूलोपचयादलघीयसा
कुचयुगेन जितः प्रणमन्निव ॥ १३।

सारसिका— बन्धुजीवप्पिआ खु भअवदी परदेवदा ।
(बन्धुजीवप्रिया खलु भगवती परदेवता । )

कलावती— हला सहि ! तुह अहररुइ(कुंभी[1]कुंभिलं) णं अवचिणुहि । ( हला सखि ! तव अधररुचिकुम्भिलमेनम् अवचिनु। )

[ सारसिका अवचयं रूपयति । ]

राजा— इदमिदानीम्,

अवचितमपचित्यां देवतायाः परस्या-
श्चरणकमलमूलं चेद्भवत्योपनीतम् ।
तदतिशयविशेषादेत्य जन्मानवद्यं
रुचिरमधरबिम्बं तेऽनुकुर्यात् कथञ्चित् ॥ १४ ॥

सारसिका— सहि ! परिस्सन्त ह्मि । ता रअणभाअणे कुसुमाइं ठाविअ खणमेत्तं उपविसह्म। (सखि ! परिश्रान्तास्मि । तद् रत्न-भाजने स्थापयित्वा क्षणमात्रम् उपविशावः । )

कलावती— जं दे रुच्चइ । ( यत्ते रोचते । )

[ इति कुसुमानि भाजने निक्षिप्य उभे उपविशतः । ]

राजा— तदावामपि पादपान्तरितौ[2] वेव तयोरालापं शृणुवः ।

विदूषकः— जं भवं आणवेदि । (यद्भवानाज्ञापयति । )

[ तथा कुरुतः । ]

---

१. 'अवहरइ थणकुम्भं' क, ब, ङ. २. 'तावेतयो' ख.

सारसिका— ( स्वगतम् ) दुल्लहजणमणरहाहिणिवेसपरवसाए मे दाणिं ण किंपि रुच्चइ । ( प्रकाशम् ) सहि कळावदि ! ओसीदन्ति विअ अङ्गाइं । ( दुर्लभजनमनोरथाभिनिवेशपरवशाया मे इदानीं न किमपि रोचते । सखि कलावति ! अवसीदन्तीवाङ्गानि । )

कलावती— ( स्वगतम्) एसा दाणिं कोमारविरोहिणो विआरस्स हाजणं गदा विअ अदिमेत्तं किळम्मदि । अळङ्घणिज्जा खु आणा महावीरस्स मअणभूवदिणो । ता कहिं अणुरत्ता भवे । होदु । पुच्छिस्सं दाव । (प्रकाशम्) सारसिए कीस किसासि । ( एषेदानीं कौमारविरोधिनो विकारस्य भाजनं गतेवातिमात्रं क्लाम्यति । अलङ्घनीया खलु आज्ञा महावीरस्य मदनभूपतेः । तत् कस्मिन्ननुरक्ता भवेत् । भवतु प्रक्ष्यामि तावत् । सारसिके ! कस्मात् कृशासि ।

राजा— (स्वगतम्)* कथमद्यापि न जानात्येषा कार्श्यकारणम् ।

विदूषकः – (सहर्षं) एसा खु सम्पदं पत्थुदं एव्व किंपि उवक्कमदि । ( एषा खलु साम्प्रतं प्रस्तुतमेव किमपि उपक्रमते । )

सारसिका — (स्वगतम्) किं एत्थ पिअसहीए भणिस्सं । होदु । एव्वं दाव । (प्रकाशम्) वदणिअमादो । ( किमत्र प्रियसख्यै भणिष्यामि । भवतु । एवं तावत् । व्रतनियमात् । )

राजा – (स्वगतम्) कथमन्यदियमुपन्यस्यति ।

विदूषकः— होदु । सुणामो । ( भवतु । शृणुवः । )

कलावती— (स्वगतम्) ळज्जाळुआ एसा णिगूहेदि । होदु ।

---

१. 'हाजणत्तणं ग' ख.

---

* 'ख' and 'ङ' omit 6 lines hence.

ता सुणामो (भो वयस्य ! साम्प्रतं तव नामधेयं ग्रहीष्यति । तच्छृणुवः)

सारसिका— (सनिर्वेदं) कळावदि ! किं कहिदेण वा अकहिदेण वा आआसमेत्तफलअस्स[1] अहिणिवेसस्स। (कलावति ! किं कथितेन वाकथितेन वा आयासमात्रफलकस्याभिनिवेशस्य।)

कलावती— कहेहि । सुणिअ सव्वं समाहेमि। (कथय। श्रुत्वा सर्वं समादधे।)

सारसिका— (परितः पश्यन्ती) पस्सदो णिळीणो जो को विजणो सुणिस्सदि। ता मिहो कहेमि। (कर्णे) एव्वं विअ। (पार्श्वतो निलीनो यः कोऽपि जनः श्रोष्यति। तन्मिथः कथयामि। एवमिव।)

राजा— कथमनया मिथ एव कथितम्।

कलावती— (सहर्षं परिष्वज्य) पिअसहि सारसिए ! दिट्ठिआ वड्ढसि। जं अणुरूवे वरे अहिणिविट्ठासि। (प्रियसखि सारसिके ! दिष्टया वर्धसे, यदनुरूपे वरे अभिनिविष्टासि।)

विदूषकः— (सक्रोधं) एसा वि दासीएसुदा सामण्णसद्देण विअ ववहरइ। (एषापि दास्याःसुता सामान्यशब्देनेव व्यवहरति।)

[सारसिका दीर्घं निःश्वसिति।]

कलावती— दिट्ठिआ खु तुमं भईरहेण विअ मन्दाइणी महोदहिं मणरहेण महाराअं पाविदासि। (दिष्ट्या खलु त्वं

1. 'फळस्स' ख.

भगीरथेनेव मन्दाकिनी महोदधिं मनोरथेन महाराजं प्रापितासि ।)

विदूषकः— सुदं सोदव्वं। (श्रुतं श्रोतव्यम् ।)

सारसिका— (सनिर्वेदं ) किं णेण मणरहेण सन्तेण असन्तेण वा। ( किमनेन मनोरथेन सता असता वा । )

राजा— मुग्धे ! मैवं वादीः । कुतः ।

भावस्ते चेन्मय्यतः किं त्रिलोकी-
साम्राज्यश्रीभद्रपीठागमेऽपि ।
भद्रे ! नो चेत्
(विरमति )

विदूषकः— किं तुह्वीं चिट्ठसि । ( किं तूष्णीं तिष्ठसि । )

राजा— मुद्रणैः किं गिरां नः
प्राची वाचोयुक्तिरेवोत्तरं ते ॥ १७ ॥

कलावती— कीस एव्वं भणासि । (कस्मादेवं भणासि । )

सारसिका— जं खु सो महाभाओ साहीणकामो त्ति[2] देवीवल्लहो त्ति एक्कदारओ त्ति अ सुणीअदि । (यत् खलु स महाभागः स्वाधीनकाम इति देवीवल्लभ इति एकदारक इति च श्रूयते ।)

कलावती— (स्वगतम् ) सच्चं एव्व एदं। ता कहं घडिस्सादि । [ इति चिन्तां रूपयति ] (सत्यमेवेदम् । तत् कथं घटिष्यते )

---

१. 'ण वा अ' ख. ङ. २. 'त्ति एक्क' ख. ङ.

राजा—

स्वाधीनकाम इति देव्यनुवर्तितेति
नित्यैकदाररतिरित्यपि सत्यमासम् ।
कल्याणि ! यावदवलोकनगोचरो[1]ऽभू-
स्तुल्या न पञ्चशरवञ्चनपिञ्छिकायाः ॥ १८ ॥

किं बहुना । त्वदपाङ्गा[2]वसङ्गात् प्रभृति अन्य एवाहमस्मि संवृत्तः ।

विदूषकः— (सहासं) एसा उण मुद्धा इसिं तुमं मण्णेदि । (एषा पुनर्मुग्धा ऋषिं त्वां मन्यते ।)

सारसिका— (सबाष्पगद्गदं) कहं एआरिसे दुल्लहे वि जणे पराहीणाए मह अहिणिवेसं जणऊण पडिक्खणं पहरेदि मच्चरी विअ मारहदओ । ता किं करिस्सं (कथमेतादृशे दुर्लभेऽपि जने पराधीनाया ममाभिनिवेशं जनयित्वा प्रतिक्षणं प्रहरति मत्सरीव मारहतकः । तत् किं करिष्ये ।)

कलावती— हला सरळे ! महाराओ गुणपक्खवादी । ता तुमं दिट्ठवंतो अवस्सं प[3]रिग्गहिस्सदि (हला सरले ! महाराजो गुण-पक्षपाती । तत् त्वां दृष्टवानवश्यं परिग्रहीष्यति । )

सारसिका— अळं सहि ! अळिआसासेहिं । (अलं सखि ! अलीकाश्वासैः । )

विदूषकः— अदिभूमिं गदा उक्कण्ठा एव्वं मुहरावेदि । (अतिभूमिं गता उत्कण्ठा एवं मुखरयति । )

---

१. 'राभू' घ. ङ. २. 'ङ्गास' ख. 'ङ्गस' घ. ङ. ३. 'पडि' ख.

कलावती— ण हु अळिअं तुइ मन्तिदपुव्वं । विसेसदो अस्सिं ओसरे । ( न खलु अलीकं त्वयि मन्त्रितपूर्वम् । विशेषतोऽस्मिन्नवसरे । )

सारसिका— ता तुह सहीए जीविदस्स पय्यवत्थापणे कञ्चि उवाअं चिन्तेहि । तत तव सख्या जीवितस्य पर्यवस्थापने कञ्चिदुपायं चिन्तय । )

कलावती— ( विचिन्त्य सहर्षं ) अत्थि दक्खाअणो णाम महाराअस्स पिअसहो । तम्मुहादो[1] एव्व संविहेमि । (अस्ति दाक्षायणो नाम महाराजस्य प्रियसखः । तन्मुखादेव संविदधामि । )

[ राजा विदूषकं प्रेक्षेत । ]

विदूषकः—जदि एव्वं णिव्वहिस्सं दे णम्मसहत्तणं । (यद्येवं निर्वहिष्यामि ते नर्मसखत्वम् । )

सारसिका— ता किं विळंबीअदि । (ततः किं विळम्ब्यते । )

कलावती[2]— किं दाणिं एत्थ दक्खाअणो वट्टदि । (किमत्र दाक्षायणो वर्तते । )

विदूषकः— वट्टदि एव्व । (वर्तत एव । )

सारसिका— ण खु कालप्पडिक्खो कामहदओ । ता दाणिं का गई । [ इति मदनबाधां रूपयन्ती रोदिति । ] ( न खलु कालप्रतीक्षः कामहतकः । तदिदानीं का गतिः । )

---

१. 'तस्समु' ख. २. 'ता ती- किं' क.

राजा — ( सानुक्रोशं पश्यन् ) अस्याः किल,

आसारः परिमार्ष्टि पत्रमकरीमास्रांभसामुल्बणो
निःश्वासो मुहुरूष्मणा मलिनयन् धूनोति बिम्बाधरम् ।
तापः कोऽपि च सम्प्रति प्रसरति प्रत्यङ्गकं निर्भरो
बाष्पस्तम्भसगद्गदाश्च सुदृशो वाचो मनः क्रीणते ॥ १९ ॥

कलावती— कीस अपदे खिज्जसि । (कस्मादपदे खिद्यसे । )

सारसिका— तुह वि कहिअ अलद्धमणरहा खणं वि ण जीविस्सं । (तवापि कथयित्वा अलब्धमनोरथा क्षणमपि न जीविष्ये । )

कलावती— ( सास्रं ) सहि ! समस्ससिहि । समस्ससिहि । (सखि ! समाश्वसिहि । समाश्वसिहि । )

सारसिका— कहं पीडिज्जंती तुमं वि पीडेदुं उवक्कन्तंह्मि । ( कथं पीड्यमाना त्वामपि पीडयितुमुक्रान्तास्मि । )

कलावती— दक्खाअणं विणा दाणिं इमस्स कज्जस्स ण किं वि अण्णं सरणं । ( दाक्षायणं विनेदानीमस्य कार्यस्य न किमप्यन्यच्छरणम् । )

राजा — सखे ! तावदवसरस्तवात्मानं दर्शयितुम् ।

विदूषकः — (स्वगतम् ) किं ववदिसिअ एदाणमत्ताणं दंसेमि । होदु । एव्व दाव । ( प्रकाशम् ) [ सरभसमुसृत्य ] कळावदि ! कहिं देवी । (किं व्यपदिश्यैतयोरात्मानं दर्शयामि । भवतु एवं तावत् । कलावति ! कुत्र देवी । )

१. 'एताणं दं' ख.

[ उभे विदूषकं दृष्ट्वा सम्भ्रान्ते बाष्पं परिमृष्टः । ]

सारसिका — (सप्रत्यभिज्ञं[1] स्वगतम्) एसो सो जो महाराएण सल्लवन्तो पासादप्पडिबिम्बे दिट्ठो[2] । (प्रकाशम्) कहं अय्यदक्खाअणो । (एष सः यो महाराजेन सँल्लपन् प्रासादप्रतिबिम्बे दृष्टः । कथम् आर्यदाक्षायणः । )

कलावती — आम सहि ! आम सहि ! । ( आम सखि ! आम सखि ! )

विदूषकः— कहं ण मे पडिवअणं । (कथं न मे प्रतिवचनम् । )

कलावती — उपविस कहेमि । (उपविश । कथयामि । )

[ विदूषकः उपविशति । ]

कलावती— कुसुमाअरुज्जाणे खु देवी भअवदीए सपज्जं करेदि । (कुसुमाकरोद्याने खलु देवी भगवत्याः सपर्यां करोति । )

राजा— ( स्मृतिमभिनीय ) आः ! तत्रैव[3] किलाहम् आहूतोऽस्मि प्रभाते । तद् विस्मृतवानस्मि चिन्तापारवश्येन ।

विदूषकः — तुह्मे उण कहिं आअदा । (युवां पुनः कुत्र आगते । )

कलावती— एत्थ एव्व भअवदिं अच्चिदुं । (अत्रैव भगवतीमर्चितुम् । )

विदूषकः — किं काळणं तुह्माणं [4]देवीविणाभावे । (किं कारणं युववोर्देवीविनाभावे । )

---

१. '(सप्रत्यभिज्ञं) एसो' ख. २. दिट्ठो । कलावती- कहं अय्यदक्खाअणो । सारसिका- अह इं । एसो एव्व दक्खाअणो । कलावती- आम' ख. ३. 'अत्रै.' क. ४. ' देवीए विना' ख.

[1]राजा— (स्वगतम्) यत् त्वया तर्कितमेनां देवी निगूहतीति।

कलावती— एत्थ बहु भणिदव्वं अत्थि। (अत्र बहु भणितव्यमस्ति।)

विदूषकः — तं किं कहेहि। (तत् किं। कथय।)

कलावती— (सचकितं) अदिगोवणिज्जं खु एदं (अतिगोपनीयं खल्वेतत।)

विदूषकः— होदु। मा भाआहि। असडक्खीणं करेमि। (भवतु। मा बिभेहि। अषडक्षीणं करोमि।)

कलावती — (अङ्गुल्या निर्दिशन्ती।) एसा सारसिआ णाम मह पिअसही। (एषा सारसिका नाम मम प्रियसखी।)

सारसिका— (स्वगतम्) एत्थ पत्थावे इह ठादुं लज्जेमि।। (उत्थाय प्रकाशम्) सहि पुडमं एव्व मणिमण्डपं गदुअ सव्वं संविहेमि। [इति जिगमिषति] (अस्मिन् प्रस्तावे इह स्थातुं लज्जे। सखि! प्रथममेव मणिमण्डपं गत्वा सर्वं संविदधामि।)

कलावती— ([2]हस्ते गृह्णती) सहि! साळीणे! [3]चिट्ठ चिट्ठ। समं एव्व गच्छह्म। (सखि! शालीने! तिष्ठ तिष्ठ। सममेव गच्छावः।)

[4]विदूषकः— (जनान्तिकं) विसज्जेहि णं। (विसृजैनाम्।)

[5]कलावती— अज्ज किं एत्थ एव्व महाराओ। (आर्य! किमत्रैव महाराजः।)

---

१. 'राजा- यत्' ख. घ. ङ. २. 'हस्तं' घ. ङ. 'सस्मितं हस्ते गृह्णाति' ख. ३. 'चिट्ठ। समं' ख. ङ. ४. 'विदूषकः- जइ विस' ख. ५. 'कलावती-(जनान्तिकं) अय्य' ख. ङ.

विदूषकः— अह इं (अथ किम् ।)

सारसिका— सहि ! महंतो खु काळो अदिक्कंतो, ता सपज्जाए[1] मं विसज्जेहि । [इति कलावत्या हस्तमवधूय गच्छति ।] (सखि ! महान् खलु कालोऽतिक्रान्तः । तत् सपर्यायै मां विसृज ।)

कलावती— जइ एव्वं ता गच्छ तुमं । (यद्येवं तर्हि गच्छ त्वम् ।)

सारसिका— [कुसुमभाजनं गृहीत्वा परिक्रामन्ती] जं सुमरिदमेत्तो[2] उवट्ठिदो दक्खाअणो ता मण्णे मणरहो वि मे णिव्वट्टिस्सदि त्ति । (यत् स्मृतमात्र उपस्थितो दाक्षायणस्तन्मन्ये मनोरथोऽपि मे निर्वर्तिष्यतीति ।)

राजा— कथमेषा मणिमण्डपमागच्छति । तदहमपि तत्रैवात्मानं तस्यै दर्शयामि । [इति पुरः[3] परिक्रम्य मणिमण्डपप्रवेशननाटितकेन स्थितः ।]

कलावतीविदूषकौ— (कर्णे) एव्वं विअ (एवमिव ।)

[इति मिथःकथनमभिनयन्तौ वसतः ।]

सारसिका— एदं मणिमण्डवं । जाव पविसामि । (एतन्मणिमण्डपम् । यावत् प्रविशामि) [प्रवेशं रूपयित्वा [4]पुरोऽवलोक्य सहर्षविस्मयसाध्वसं[5] स्वगतम्] कहं एत्थ एव्व सो महराओ । (कथमत्रैव स महाराजः ।)

[सापत्रपं पुष्पभाजनहस्ता स्तिमिता तिष्ठति ।]

राजा— (सहर्षादरं नायिकां निर्वर्णयन् स्वगतम् ।)

---

१. 'मति' ख. घ. ङ. २. 'त्त एव्व उ' ख. ३. 'पुरतः' ख. घ. ङ. ४. 'पुरो वि' ख. ५. 'ध्वसा स्व' ख.

स्तम्भारम्भस्तिमितवपुराश्चर्यचर्यातिरेकात्
त्रासोत्कम्पिस्तनभरदरस्रस्तमुक्तोत्तरीया ।
वृष्टिं दृष्ट्या विकिरति मुदा नूतनानां सुधाना-
मार्तिं मूर्तेव मयि करुणा विध्यतो मीनकेतोः ॥ २० ॥

(प्रकाशम्) दयिते !

कुटिलकोमलकुन्तलशाखिना
कुरबकस्तबकस्तनशोभिना ।
कुसुमभाजनभासुरपाणिना
कुतुकितं मम ते वपुषाधुना ॥ २१ ॥

अयि कान्ते ! किं चिन्तयसि ।

एह्येहि पङ्कजमुखि ! प्रतिपालयेऽह-
मेकश्चिराय भवतीं मणिमण्डपेऽस्मिन् ।
एतानि शीतलय चन्द्रमणीतुषारै-
रङ्गान्यनङ्गलुलितानि तवाङ्गकैर्मे ॥ २२ ॥

[ सारसिका सलज्जानुरागं राजानमपाङ्गयते[1] । ]

राजा— ( सस्मितम् )

आकर्णकृष्टधनुषः कुसुमायुधस्य
नक्तन्दिवं प्रहरतो नलिनेक्षणे ! माम् ।
दिष्ट्या चिरादपचिता विशिखास्त्वयेति
हृष्टे मयि क्षिपसि किन्नु कटाक्षपातान्[2] ॥ २३ ॥

सारसिका— (स्वगतम् ) कहं एदिणा परिहासेण विस्सद्धं पेक्खिदुं[3] वि ण पारेमि । ( कथमनेन परिहासेन विस्रब्धं प्रेक्षितुमपि न पारयामि । )

---

१. 'ति' ख. २. 'बाणान्' अ. घ. ङ. ३. 'दुं ण.' ख.

राजा— किं कुसुमभाजनहस्ता तिष्ठसि ।

सारसिका— ( सव्रीडस्मितम् ) णं महाराओ क्खु तुमं । ता अरित्तपाणिह्मि । ( ननु महाराजः खलु त्वम् । तदरिक्तपाणिरस्मि )

राजा— ( सस्मितम् ) तर्हि मह्यमुपदेहि कुसुमानि ।

[ सारसिका सलज्जं राज्ञो हस्ते कुसुमभाजनमर्पयति । ]

राजा— (सास्मितम्) भद्रे ! भाविनः कल्याणकुसुमाञ्जलेः प्रस्तावनेयम् ।

सारसिका— ( स्वगतम्) अवि णाम एव्वं भविस्सदि । ( अपि नामैवं भविष्यति । ) [ सव्रीळं मुखमपनयति । ]



राजा— [ भाजनं भूमौ निधाय सारसिकां हस्ते गृह्णन् ] अयि प्रेयसि ! इदानीम्,

भुजलताविलसत्करपल्लवा
वलयशिञ्जितमञ्जुलकूजिता ।
कुसुमिता करजैः कुटिलालके !
फलतु मां परिरभ्य चिराय ते ॥ २४ ॥

[ नेपथ्ये घण्टाध्वनिः । उभावाकर्ण्य परस्परं पश्यन्तौ हर्षं नाटयतः । ]

राजा— ( स्वगतम् ) नूनमस्याः करग्रहो मम भूयसां श्रेयसां निदानम् । यदेतत्समसमयमेव कुसुमाकरोद्याने देव्याश्चण्डिकाराधनघण्टाध्वनिरुज्जृम्भते ।

सारसिका— ( शृङ्गारलज्जां नाटयन्ती स्वगतम् ) कहं दाणिं

१. 'डस्मित' ख. घ. ङ. २. 'मवनमयति' ख. घ. ङ. ३. 'स्तेन गृ' घ.

एदस्स पाणिपङ्कअपरिसमेत्तेण[1] मुकुळिअकदम्बडम्बरविडम्बआइं अङ्गाइं। [रोमाञ्चं नाटयति ।] (कथमिदानीमेतस्य पाणिपङ्कजस्पर्शमात्रेण मुकुलितकदम्बडम्बरविडम्बकान्यङ्गानि ।)

राजा — [ नायिकां निर्वर्णयन् स्वगतम् ]

स्विन्नानि पुलकितानि स्वच्छानि मृदूनि शिशिरमसृणानि ।
अभिनवमृणालिकानामाबिभ्रति रीतिमङ्गकान्यस्याः ॥ २५॥

( प्रकाशं सस्मितम् )

मुग्धे किन्नु विलम्बसे कलय मे कल्याणि ! बिम्बाधरं
दोर्वल्लीमपि चन्द्रकान्तमसृणामंसे ममासज्जय ।
उत्तुङ्गामपि मण्डलीमुरसि मे निक्षिप्य वक्षोजयोः
शिक्षस्व प्रसवायुधागमशिरस्सिद्धान्तनिर्धारणम्[2] ॥ २६ ॥

सारसिका— (स्वगतम्) कहं दाणिं लज्जाहरिसपरवसाए मह कादव्वं ण किं वि पडिभाइ । (कथमिदानीं लज्जाहर्षपरवशाया मम कर्तव्यं न किमपि प्रतिभाति ।)

राजा— [नायिकाङ्गं किञ्चिन्निजाङ्गेन पार्श्वे संश्लेषयन् स्पर्शसुखमभिनीय सपुलकोद्भेदं स्वगतम् । ]

किमाश्च्योतैः सिक्तो मलयजरसानामविरलैः
किमासान्द्रैरिन्दोरमृतविसरैर्वा कवचितः ।
किमामज्जन्मध्येहिमसरसि मग्नोऽहमथवा
घनः सर्वाङ्गीणः प्रविसरति यत् कोऽपि जडिमा ॥ २७॥

कलावती— (पार्श्वतः पश्यन्ती) हद्धि ! हद्धि !। एसा क्खु चउरिआ मणिमण्डवे[3] आअदा । (हाधिक् ! हाधिक् ! एषा खलु

१. 'मत्तएण' ख. २. 'णाम्' ख. ङ. ३. 'मण्डवं एव्व आ' ख.

चतुरिका मणिमण्डपे आगता।)

विदूषकः[1]— पमादो पमादो। किं करिस्सदि दाणिं वअस्सो (प्रमादः प्रमादः। किं करिष्यतीदानीं वयस्यः।)

[ततः प्रविशति चतुरिका]

चतुरिका— आणत्तं ह्मि देवीए सवरिअं समावेदुं महाराअं पडिक्खन्तीए। जइ तुमं पूआपरिस्सन्तं सारसिअं घत्तूण अन्देउरं गच्छ। अहं वि खणादो तहिं[2] आअच्छेमि त्ति। ता मणिमण्डवं गच्छेमि। [परिक्रामति] (आज्ञप्तास्मि देव्या सपर्यां समापयितुं महाराजं प्रतीक्षन्त्या। यथा त्वं पूजापरिश्रान्तां सारसिकां गृहीत्वा अन्तःपुरं गच्छ। अहमपि क्षणात् तत्रागच्छामीति। तन्मणिमण्डपं गच्छामि।)

विदूषकः— (सोद्वेगं) अदिसङ्कडे पडिदं ह्मो। (अतिसङ्कटे पतिताः स्मः।)



कलावती—(स्वगतं) किं अण्णं पाणाणं एव्व मह दाणिं संसओ। होदु। एव्वं दाव। (प्रकाशम्) दक्खाअण तुमं इदो एव्व पधावेहि[3]। (किमन्यत्। प्राणानामेव ममेदानीं संशयः। भवत्वेवं तावत्। दाक्षायण! त्वम् इत एव प्रधाव।)

(विदूषकः उत्थाय धावति।)

चतुरिका—इदं मणिमण्डवं। जाव पविसामि। [प्रवेष्टुमुद्युङ्क्ते] (इदं मणिमण्डपम्। यावत् प्रविशामि।)

[कलावती त्वरितं पार्श्वतो निलीय पश्चान्निभृतपदमुपसृत्य[4] चतुरिकाया

१. 'कः- (विलोक्य) पमा' ख. घ. ङ. २. 'ताहिं एव्व' ख. ३. 'पत्थावेहि' क. घ. ङ. ४- 'दक्रमसु' ख.

नेत्रे कराभ्यां पिदधाति । ]

चतुरिका— ( स्तिमिता सती ) सारसिए मुञ्चेहि मुञ्चेहि । पच्चा [1]होदु [2]तुज्झ विब्भमो[3] । (सारसिके ! मुञ्च मुञ्च । पश्चाद् भवतु तव विभ्रमः ।)

सारसिका— अह्मो चउरिआ । [ संचकितमुत्थाय गच्छति ] (अहो ! चतुरिका ।)

राजा—( सभयं) किमिदानीं प्रतिविधेयम् । ( [4]पुरः पश्यन् सहर्ष-विस्मयं ) कथमियं चतुरिका कलावत्या पिहितनयना तिष्ठति । तन्निभृतपदक्रमं निर्गच्छामि । [परिक्रम्य परितः पश्यति । कलावती भ्रूसंज्ञया राज्ञे विदूषकपदवीं दर्शयति । राजा सस्मितमपसरति ]

विदूषकः— ( पश्चात् पश्यन् सहर्षम् ) दिट्ठिआ कळावदीए सुट्ठु [5]संविहिदं । एसो वअस्सो वि इदो एव्व आगच्छइ । ता णं इह णिळीअ पडिवाळेमि । [तथा करोति] (दिष्ट्या कलावत्या सुष्ठु संविहितम् । एष वयस्योऽपीत एवागच्छति । तदेनमिह निलीय प्रतिपालयामि ।)

राजा— एष वयस्यः । [ इति त्वरितमुपक्रम्य निलयनमभिनयति । ]

विदूषकः— दिट्ठिआ वड्ढामहे । (दिष्ट्या वर्धामहे । )

राजा— ( सनिर्वेदम् ) कोऽयमस्थाने हर्षः । यतः,

दयिताङ्गसङ्गसुखितस्त्वरितं विद्रावितोऽस्मि चतुरिकया ।
मञ्जर्यनुषङ्गपरो भृङ्ग इवाकाण्डवात्ययेदानीम् ॥ २८॥

(सविस्मयम् ) पश्य सखे ! कलावत्याः कालानुरोधिनीं प्रतिभाम् ।

विदूषकः— णं पेक्खामि । (ननु पश्यामि । )

---

१. 'होन्तु' क. घ. ङ. २. 'तुह' ख. घ. ३. 'मा' क. घ. ङ. ४. 'पुरतः' घ. ङ. ५. 'सुहित' ङ.

चतुरिका— ( पश्चात् करौ प्रसार्य कलावतीमुखमामृशन्ती ) कलावदि ! अळं कीळाए। ( कलावति ! अलं क्रीडया । ) [ कलावती सहासं मुञ्चति । ]

सारसिका –( स्वगतम् ) पच्चुज्जीविदं ह्मि दाणिं कलावदीए। ( प्रत्युज्जीवितास्मीदानीं कलावत्या । )

चतुरिका— (विलोक्य) कीस दाणिं वि पूआ ण णिव्वट्टिदा। ( कस्मादिदानीमपि पूजा न निर्वर्तिता । )

कलावती— सारसिआए सअं पुप्फावचअविळम्बादो । ( सारसिकायाः स्वयं पुष्पावचयविलम्बात् । )

चतुरिका— णं मज्झह्णो जादो । ( ननु मध्याह्नो जातः । )

कलावती— ता सिंगारसरं एव्व ह्मादुं गच्छह्म । ( तत् शृङ्गारसर एव स्नातुं गच्छामः । )

[ सर्वाः प्रस्थिताः । ]

राजा— ( उच्चैरुद्वीक्ष्य) हन्तेदानीमलङ्कुरुते भगवानम्बरान्तरालमरविन्दबान्धवः। ( सर्वतो दृष्टिं प्रसारयन् ) पश्य सखे! दिनयौवनस्य प्रचण्डिमानम् । सम्प्रति हि,

भास्वानुत्तपते कठोरविसरैरुस्रैरसौ याजुषैः
छाया भूमिरुहामधो वलयिता मात्यालवालान्तरे ।
सुस्निग्धामधिशेरते च हरिणाः सम्भूय कच्छस्थली-
मुद्यानान्तरुदग्रतापचकितो वातोऽपि हा लीयते ॥ २९ ॥

---

१. 'त्या मु' ख.

अपि च,

शकुन्ता दृश्यन्ते विटपिषु समन्ताद्राविकरैः
कठोरैर्लोकानामघवनकुठारैरभिहताः ।
स्वनीडक्रीडद्भिः परिलसति च क्रोडमिथुनै-
स्तरूणामाधारः फलभरगुरूणामपि पुरः ॥३०॥

तदिदानीं प्रतीक्षमाणां देवीं दिदृक्षे । अतः कुसुमाकरोद्यानपथा मादेशय ।

विदूषकः— इदो इदो[2] भवं । (इत इतो भवान् ।)

[ उभौ परिक्रामतः ]

सारसिका— (राजपरिसरं पश्यन्ती स्वगतम्) अवि णाम पुणो वि णं सोम्मदंसणं पेक्खिस्सं । (अपिनाम पुनरपि एनं सौम्य-दर्शनं प्रेक्षिष्ये । [इति सनिःश्वासं प्रस्थिता । ]

राजा— [शाखान्तरेण सारसिकां पश्यन् स्वगतम्] अयि ! दयिते ! शृङ्गाररसदेवते !

मुकुलितकदम्बडम्बरमङ्गमिदं मे तवाङ्गसङ्गेन ।
अनुसरतीदानीमपि जडिमस्तम्भप्रकम्पसौभाग्यम् ॥३१॥

[ [3]निष्क्रान्ताः सर्वे । ]

तृतीयोऽङ्कः ।

---

१. 'सन' क. घ. ङ. २. 'दो । [उभौ ]' क. व. ङ. ३. 'इति निष्क्रा' ख.

## ॥ चतुर्थोऽङ्कः ॥

[ ततः प्रविशति काषायाम्बरधारिणी[1] जटिला योगिनी । ]

योगिनी — कथमेषा चन्द्रकला कनकपञ्जरावलोकनमुषितहृदया सविधमुपसर्पन्तीमपि मां नावलोकते ।

[ प्रविश्य यथानिर्दिष्टा चन्द्रकला सोल्लासम्[2] ]

चन्द्रकला— अणुउणो एव्व ताए ळक्खणाए एसो पञ्जरो । (अनुगुण एव तस्या लक्ष्मणाया एष पञ्जरः । )

योगिनी— (स्वगतम्) भवतु । स्वयमस्यै तावदात्मानं दर्शयामि । (प्रकाशम्) कुतः कीदृशी सा लक्ष्मणा ।

चन्द्रकला— (दृष्ट्वा ससंभ्रमं) कहं तत्तहोदी मरुव्विहा ! होदि ! पणमामि । (कथं तत्रभवती मरुद्वृधा । भवति ! प्रणमामि । )

मरुद्वृधा— स्वस्ति भवत्यै ।

चन्द्रकला— हिओ किळ[3] विजअदसमिम्मि विजअपत्थाणं कदुअ पडिणिवट्टन्तेण महाराएण विचित्तवण्णा[4] सुळक्खणा कावि[5] लक्खणा समासादिआ । सा अ कीळाणिमित्तं देवीए दिण्णा । (ह्यः किल विजयदशम्यां विजयप्रस्थानं कृत्वा प्रतिनिवर्तमानेन महाराजेन विचित्रवर्णा सुलक्षणा कापि लक्ष्मणा समासादिता । सा च क्रीडानिमित्तं देव्यै दत्ता । )

मरुद्वृधा— विचित्रविहगविनोदिनः खलु राजदाराः ।

---

१. 'कषा' क. २. 'सम् ] अणु', ३. 'ळ अज्ज वि' ख. ४. 'ण्णा सा ळक्खणा समा' ख, घ. ५. 'कावि समा' घ, ङ.

चन्द्रकला— कहिं दाणिं तत्तहोदीए आअमणं । (कुत्रेदानीं तत्रभवत्या आगमनम् । )

मरुद्वृधा— इतस्तुरीये भाविनि दिवसे तुलाराशिमुपसंक्रामति सवितरि गौरीमयूरे भगवतो महेश्वरस्य मासमात्रप्रसृतं महोत्सवं [1]दिदृक्षमाणा अहं प्रस्थायाविलम्बमागमिष्यामि । तद् भवतीभ्यां न पर्युत्सुकाभ्यां भवितव्यमिति देवीदीपाम्बिकयोः प्रियसख्या लोकपावन्या निदेशमावेदयितुमिहैवागतास्मि ।

चन्द्रकला— (सश्लाघं) सिद्धिक्खेत्तप्पिआ खु जोइजणा णाम । (सिद्धिक्षेत्रप्रियाः खलु योगिजना नाम । )

मरुद्वृधा— सत्यमिदं, तथापि न सिद्धिक्षेत्रमिति तत्र जिगमिषति तत्रभवती । किन्तु चोळदेशसञ्चारिण्याः सख्या मम सा मुख्यावसतिरिति । यतस्तस्या बृहदीश्वरं वन्दमानायाः शिवगङ्गानिकटनिष्कुटोटजं विविक्तमधिवसन्त्या निजास्पदमपि वाराणसी मनसे [2]न रोचते ।

चन्द्रकला— (सप्रश्रयं) तत्तहोदीए सुळहदाए किं वि पुच्छिदुका[3]मह्मि । (तत्रभवत्याः सुलभतया किमपि प्रष्टुकामास्मि । )

मरुद्वृधा — पृच्छ विस्रब्धम् ।

चन्द्रकला — कहं पुढमं णअरप्पवेसं असम्मण्णंतीए पच्चा पाआरप्पवेसो । कहं [4]अ तहिं एव्व अहिरुई अ । ( कथं प्रथमं नगरप्रवेशमसम्मन्यमानायाः पश्चात् प्राकारप्रवेशः । कथं च तत्रैवाभिरुचिश्च । )

मरुद्वृधा— जानासि खलु [5]भद्रे कुम्भीश्वरसन्निधौ महामघदिवसंसायंसमयमिलितया भगवती दीपाम्बिकया कथञ्चित् तज्ञानगर-

---

१. 'पावन्या' घ. २. 'सो न' ख. ३. 'मं ह्मि' ख, ब. ४. 'वा त' ख. ५. 'रूरज' क. ६. 'भद्रे श्रीकु' ख.

मिदं प्रापितेति ।

चन्द्रकला— महाराएण देवीए अज्जमेहाविणा अ त्ति भणिदव्वं । (महाराजेन देव्या आर्यमेधाविना चेति भणितव्यम् । )

मरुद्वृधा— सत्यमिदम् । तथापि भूयसीभक्तिका[1] दीपाम्बिकेति तामेव व्यपादिशम् ।

चन्द्रकला— तदो तदो ।

मरुद्वृधा— ततः परममात्यमेधाविना बहुविधाभिः प्रार्थनाभिः स्वभवनानयनापदेशात् प्राकारं प्रवेशिता ।

चन्द्रकला — जुज्जइ[2] । महंतो खु तस्सिं अज्जमेहाविणो वीसासो । जं पुरा तत्तहोदीए कहिदो भाविजवणुच्छेदो[3] दाणिं अणुहवपहं आरोहदि । (युज्यते । महान् खलु तस्यां आर्यमेधाविनो विश्वासः । यत् पुरा तत्रभवत्या कथितो भावियवनोच्छेद इदानीं अनुभवपथमारोहति । )

मरुद्वृधा— न केवलमेतदेव तस्य विश्वासे कारणम् ।

चन्द्रकला— किं अवरं । (किमपरम् । )

मरुद्वृधा— यत् किल नवरात्रोपक्रमादिने महाराजविजये मङ्गलमाशंसमानेन मेधाविना किमपि हृदयगतं पृष्टा भगवती समाधिदृष्टमवादीत् ।

किञ्चिद्भवान् पृच्छति जीवरत्नं
निगूढमन्तर्भवनं[4] तदास्ते ।
प्रकाशमासाद्य तदद्य राज्ञो
भोगाय सम्पत्स्यत उत्सवेऽस्मिन् ॥ १ ॥

इति ।

१. 'भूयोभ' ख. २. 'इ जुज्जइ । ' ख, घ. ३. 'जवणच्छे' क. ४. 'ने त' ख.

चन्द्रकला – (विमृश्य स्वगतम्) सारसिअं विअ परामसदि एदं वअणं । अहव को पसङ्गो मेहाविपुच्छिदस्स ताए अ । (प्रकाशम्) अवि णाम जाणीअदि किं तं जीवरअणं त्ति । (सारसिकामिव परामृशतीदं वचनम् । अथवा कः प्रसङ्गो मेधाविपृष्टस्य तस्याश्च । अपिनाम जानाति किं तद् जीवरत्नमिति । )

मरुद्वृधा— (स्वगतम् ) अनवसरोऽयं प्रकाशनाय । (प्रकाशम) नहि नहि ।

चन्द्रकला तदो तदो । (ततस्ततः ! )

मरुद्वृधा- ततश्चात्मैकविदितं हृदयगतमेवाभिहितवतीति तस्य भूयान् विश्वासस्तस्यामिदानीम् ।

चन्द्रकला— (सश्लाघम्) उइदो खु वीसासो तारिसे विण्णाणे । तदो तदो । (उचितः खलु विश्वासस्तादृशे विज्ञाने । ततस्ततः । )

मरुद्वृधा – ततश्च तस्याग्निशरणे,

त्रेतेव पूज्यमानेयमनयद् वासरान् बहून् ।
आकर्णयन्ती मीमांसामानन्दाद् ब्रह्मकर्मणोः ॥ २ ॥

ततश्च महाराजेन महता पुरस्कारेण निजभवनं प्रापिता निखिलमप्यनुगृह्य तदीयं जनं पुनः प्रतिष्ठमाना दीपाम्बिकया सप्रश्रयं प्रणम्य धर्मोपदेशाय स्वसमीपवासं प्रार्थिता ।

चन्द्रकला – तदो वरं अहं वि जाणामि तस्सिं एव्व अणुअम्पाए सअं एव्व सिवगङ्गारामे अहिरमदि त्ति । (ततः परमहमपि जानामि तस्यामेवानुकम्पया स्वयमेव शिवगङ्गारामे अभिरमत इति । )

मरुद्वृधा— स किलोद्देशो दक्षिणदेशे निजास्पदमस्याः । अतस्तत्रैवाभिरुचिः ।

चन्द्रकला— जुज्जइ[1] जुज्जइ । (युज्यते युज्यते । )

मरुद्वृधा— तदस्मदागमनं देवीदीपाम्बिकयोर्निवेद्यताम् ।

चन्द्रकला— जं भअवदी आणवेदि । (यद्भगवत्याज्ञापयति । )

[इति निष्क्रान्ता । ]

मरुद्वृधा— कथमियं सम्भ्रान्ता कलावती परापतति ।

[ प्रविश्य कलावती सहर्षस्मितम् । ]

सुट्ठु दाणिं मए उवक्कन्तं । जं किळ अंदेउरचारिणा वेज्जेण सारसिआए वाही ण होदि त्ति कहिदे दुट्ठग्गहावेसावदेसो मए उवक्खित्तो । तं एव्व सच्चं मण्णंतीए देवीए आचाक्खिदं ह्मि– अज्ज रत्तिम्मि तत्तहोदीए लोअपाविणीए समीवं पाविअ से रक्खं करेहि त्ति । तदो अ दक्खाअणो मए सुट्ठु संविहिदो तहिं एव्व महाराअं आणेहि त्ति । (विमृश्य) कहं पाआरदक्खिणदुवाररक्खिहिं अणहिण्णादस्स तस्स तहिं आअमणं त्ति संकेदि मे हिअअं । दक्खाअणो उण तहिं वि संविहेमि त्ति गदो । होदु[2] । अह्मकेराअमणं भअवदीए णिवेदेमि । [इति त्वरितं परिक्रामति । ] (सुष्ठ्विदानीं मयोपक्रान्तम्, यत्किल अन्तःपुरचारिणा वैद्येन सारसिकाया व्याधिर्न भवतीति कथिते दुष्टग्रहावेशापदेशो मयोपक्षिप्तः । तमेव सत्यं मन्यमानया देव्या आख्यातास्मि– अद्य रात्रौ तत्रभवत्या लोकपाविन्याः समीपं प्रापय्य अस्या रक्षां कारय इति । ततश्च दाक्षायणो मया सुष्ठु संविहितः तत्रैव महाराजमानयेति । कथं प्राकारदक्षिणद्वाररक्षिभिरनभिज्ञातस्य तस्य तत्रागमनमिति शङ्कते मे हृदयम् । दाक्षायणः पुनः तत्रापि संविदधामीति गतः । भवतु । अस्मदागमनं भगवत्यै निवेदयामि ।

१. 'इ । मरु' ङ. २. 'दु । रत्तिम्मि अज्ज' ख, घ.

मरुद्वृधा— कलावति ! [1]किं सम्भ्रान्ता गच्छसि ।

कलावती— (विलोक्य) अह्मो ! दिट्ठिआ एत्थ एव्व मरुव्विहा । (उपसृत्य) होदि वंदामि । (अम्मो ! दिष्ट्या अत्रैव मरुद्वृधा । भवति ! वन्दे ।

मरुद्वृधा— अभिमतेन[2] युज्यस्व ।

कलावती— किं पत्थिदा भअवदो । ( किं प्रस्थिता भगवती । )

मरुद्वृधा— श्वः प्रस्थास्यते ।

कलावती— ता अज्ज रत्तिम्मि सारसिआए[3] गहावेसो णिगह्मीअदां[4] त्ति देवीणिदेसं ताए णिवेदिदु गच्छेमि । (तदद्य रात्रौ सारसिकाया ग्रहावेशो निगृह्यतामिति देवीनिदेशं तस्यै निवेदयितुं गच्छामि ।

मरुद्वृधा — (साशङ्कं) कथं ग्रहाविष्टा तपस्विनी ।

कलावती — आम होदि ! आम । (आम भवति ! आम । )

मरुद्वृधा— (स्मृतिमभिनीय सश्लाघं स्वगतम् । ) अहो सौहार्दमस्याः सारसिकायां, यदुद्भिन्नामपि[6] मदनवेदनामर्थान्तरैर्निगूहते । ( प्रकाशम् ) सत्यमेवमेव ।

नालापो न च मौनमेव न पुनर्निद्रा न वा जागरो
नोद्बोधो न च मोह एव न रुचिर्न द्वेषवेषोऽपि वा ।
ह्यस्तस्यामुपलक्षिता मम दृशा तत्तादृशीयं दशा
हाहन्त ! ग्रह एव कोऽपि चकितां शङ्के तदास्कन्दति । ३ ॥

भवतु, भगवत्यनुग्रहादेव निवर्तिष्यते । तदहमेव तस्यै निवेद-

---

१. 'क सं' २. 'ते यु' क. ३. 'आ गहा' ख. ४. 'दु त्ति' क, ख, ङ.
५. 'सातङ्कं' ङ. ६. 'पि तस्यां मदन' ख, ङ.

यामि । क्वेदानीं देवीदीपाम्बिके ।

कलावती— चन्दकळाए णिवेदिअतुह्मकेराअमणाओ देवदाआरे तत्तहोदिं पडिवालेदि । (चन्द्रकलया निवेदितयुष्मदीयागमने देवतागारे तत्रभवतीं प्रतिपालयतः । )

मरुद्वृधा— (श्रुतिमभिनीय) महाराजैस्यैव पार्श्वतः स्वरसंयोगः श्रूयते । तदावां देवतागारमेव गच्छावः ।

कलावती— इदो इदो भअवदी । (इत इतो भगवती । )

[उभे परिक्रम्य निष्क्रान्ते । ]

मिश्रविष्कम्भः ।



---

[ततः प्रविशति पर्युत्सुको राजा विदूषकश्च । ]

राजा— (सपुलकोद्भेदं)

सन्ध्यासु रात्रिषु दिवेत्यपि सर्वकाले
पश्चात् पुरः परित इत्यपि सर्वदेशे ।
तामेव हन्त ! परिशीलयदन्तरङ्गं
कान्तां क्रमेण भजते मम तन्मयत्वम् ॥ ४ ॥

(स्मृतिमभिनीय) अपि सत्यः कलावत्युपक्रमः ।

---

१. 'णा देव' क, घ, ङ. २. 'लअंदि' ख. ३. 'जस्यैव' क.

विदूषकः— को सन्देहो । (कः सन्देहः । )

राजा— (आकाशे लक्ष्यं बद्ध्वा सश्लाघं ) साधु कलावति ! साधु । निपुणमुपक्रान्तम् । कुतः,

अङ्कुरितस्तदवलोकसुधावसेका-
दुद्भिन्नपल्लव इवातिदृढानुरागात् ।
हस्तग्रहात् कुसुमितश्च मनोरथद्रुः
प्रायः फलेदिव तवेदृशसंविधानात् ॥५॥

विदूषकः— भळदि एव्व त्ति भणिदव्वं । (फलत्येवेति भणितव्यम् । )

राजा— कथं महति प्रतिबन्धे सति तावानध्यवसायः।

विदूषकः— को वा पडिबन्धो । (को वा प्रतिबन्धः । )

राजा— प्राकारप्रतीहारो भद्रसेनः ।

विदूषकः— णं मए सो दासीएसुदो अदिसंधिदो । ( ननु मया स दास्याःसुतोऽतिसन्धितः । )

राजा— कथमिव ।

विदूषकः— कळावदीए वअणं सुणिअ भद्दसेणसमीवं गदेण मए हिओ तुह पुरदो पवुत्तं पडिमाणिच्चं पसंगादो उवस्रुलोइदं । (कलावत्या वचनं श्रुत्वा भद्रसेनसमीपं गतेन मया ह्यस्तव पुरतः प्रवृत्तं प्रतिमानृत्तं प्रसङ्गादुपश्लोकितम् । )

राजा— ततस्ततः ।

विदूषकः— [3]तदो अ दोवारिआहिआराहिदाणं अह्माणं एआरिसाइं

१. 'गात् । विदूषकः–' क, ब, ङ. २· 'णच्चं' क. ३. 'अदो' ब.

अब्भुदाइं दक्खिदुं असुलहाइं त्ति णिव्विज्जंतो सो मए भणिदो ।
(ततश्च दौवारिकाधिकारास्थितानामस्माकम् एतादृशान्यद्भुतानि द्रष्टुमसुलभानीति निर्विद्यमानः स मया भणितः । )

राजा — कथमिव ।

विदूषकः— ते खु णच्चापआ महाराअपरितोसणिमित्तं पुरा एव्व पत्थिदं एकं पओअं अज्ज बिहदीसरसण्णिहिम्मि दंसइस्संदि । ता तहिं एव्व तुमं पेक्ख । महाराअस्स उण आण अहं दावेमि त्ति। (ते खलु नर्तका महाराजपरितोषनिमित्तं पुरैव प्रार्थितमेकं प्रयोगम् अद्य बृहदीश्वरसन्निधौ दर्शयिष्यन्ति, तत् तत्रैव त्वं पश्य। महाराजस्य पुनराज्ञामहं दापयामि इति ।)

राजा— सत्यमेतत् । अनुज्ञाता एव मया नर्तकाः प्रयोक्तुमिदानीं गताः ।



विदूषकः — सो वि आणं गहिदुं आअदो चिट्ठइ । (सोऽप्याज्ञां ग्रहीतुमागतस्तिष्ठति । )

राजा— एष ददामि । (पुरोऽवलोक्य) कः कोऽत्र भोः ! ।

(प्रविश्य)

कञ्चुकी— विजयतां देवः ।

राजा— दण्डिनायन ! मद्वचनादभिधीयतां भद्रसेनः अनुमन्यामहे तव प्रतिमानृत्तविलोकनकौतूहलम् । तत् प्राकारकवाटमाप्रभात मुद्घाटितमास्तां, सर्वेऽपि जनाः सुखेन सम्पश्यन्तामिति ।

कञ्चुकी — यद् देव आज्ञापयति । (इति निष्क्रान्तः । )

१. 'माविलो' क. २. 'नकुद्' घ. ३. 'न पश्यन्ता' ख, घ.

राजा— साधु, निपुणोऽसि संविधाने । तत् परिज्ञायतां कियदवशिष्टमह्न इति ।

विदूषकः— (विलोक्य) अये ! अत्थसिहरिसिहरं अळंकरेदि भअवं अज्जबंधू । (अये ! अस्तशिखरिशिखरमङ्करोति भगवानब्जबन्धुः ।

राजा— (समन्तादवलोक्य) पश्य सखे ! सायन्तनमुदन्तम् । तथाहि—

आसीदन्ति शकुन्तयः कलकलैरेते कुलायद्रुमा-
नासीदन्नपि कोक एष सुदृशा हा ! विप्रयुङ्क्ते पथि ।
एता वासकसज्जिका इव दिशश्चन्द्रागमेनोत्सुकाः
काश्मीरैरिव सान्ध्यरागरुचिभिर्गात्रं परिष्कुर्वते ॥ ६ ॥

विदूषकः— अहिअं खु सोहदि दे अंदेउरे साअंतणी ळच्छी) (अधिकं खलु शोभते ते अन्तःपुरे सायन्तनी लक्ष्मीः । )

राजा — (निर्वर्ण्य)

एते मत्ताः कपोता मणितरुतकृतः सम्परिक्रम्य नम्रा-
श्चुम्बन्तः प्रेयसीभिर्विदधति विहृतिं सौधगोपानसीषु ।

किञ्च,

एताः स्नातानुलिप्ता मृदुवसनभृतो दीपिकाः कल्पयन्ति
स्निग्धा मुग्धाभिलापा मुखरितवलयाः पश्य शुद्धान्तकन्याः ॥७॥

विदूषकः — (सहस्तनिर्देशम्) सखे ! पेक्ख पेक्ख । किंवि एत्थ अच्चरिअं ( सखे ! पश्य पश्य । किमप्यत्राश्चर्यम् । )

राजा— (दृष्ट्वा)

---

१. 'क्ख । किं' ङ. २. 'विलोक्य' क.

मुग्धेयं किल दीपमर्पयितुमायान्ती मणीवेश्मनि
स्वस्यैव प्रतिमां समीक्ष्य पुरतस्तत्रादर्शी सम्मुखीम् ।
एषा काचन दीपिकां विभजतीत्याशङ्क्य पश्चादथ
व्यावृत्य प्रतिपद्य तत्र च तथा भूयः परिभ्राम्यति ॥ ८ ॥

विदूषकः मङ्गळो दे होदु एसो दीपदंसणमहूसवो (मङ्गळस्ते भवत्वेष दीपदर्शनमहोत्सवः । )

[राजा दीपं नमस्कृत्य किञ्चिन्निमीलिताक्षः साञ्जलिपुटम् इष्टदेवतानुध्यानं नाटयति । ]

विदूषकः — (ऊर्ध्वमवलोक्य) एसो खु भअवं मिअंको भवं विअ कित्तिहिं जोह्णाहिं भुवणं पआसेदि । (एष खलु भगवान् मृगाङ्को भवानिव कीर्तिभिः ज्योत्स्नाभिर्भुवनं प्रकाशयति । )

राजा— (उन्मील्य पश्यन्) अनेन खलु समयान्तरतोऽपि शरदुत्कृष्यते ।

विदूषकः— किं वसंतादो[1] वि । ( किं वसन्तादपि । )

राजा— कः सन्देहः ।
मन्दानिलो मधुकरः पिक इत्यमीभि-
र्मन्दा भजन्ति मदमेकपदे[2] वसन्ते ।
अत्रान्तरङ्गसुहृदेष मनोभवस्य
केलीं[3] तरङ्गयति केवल एव चन्द्रः ॥ ९ ॥

विदूषकः— एव्वं एदं । अदो एव्व दाणिं[4] जोह्णीसु जामि-

१. 'दो । राजा' क. २. 'मुद' ख. ३. 'केलिं' ख, घ. ४. 'दाणिं स जो- क, घ, ङ.

णीसु कुंडलिआहिणवेक्खुकोदंडणिरंतरणीसंकपुंखाणुपुंखसंघाडिअ-पुंडरीअसरणिअरस्स मअरकेदुणो दुव्वारपरक्कमेण परवसाओ माणिणीओ विसअं एव्व रमणं अणुणेंति । अवि अ,

मोत्तिअविभूसणाओ घणसारासारलित्तगत्ताओ ।
खोमावउंठिआओ[1] पमदाओ जाव अभिसरंदि पिअं ॥ १० ॥

(एवमेतत् । अत एवेदानीं ज्यौत्स्नीषु यामिनीषु कुण्डलिताभिनवेक्षुकोदण्डनिरन्तरानिश्शङ्कपुङ्खानुपुङ्खसंघटितपुण्डरीकशरनिकरस्य मकरकेतोः दुर्वारपराक्रमेण परवशा मानिन्योः विशदमेव रमणमनुनयान्ति । अपि च,
मौक्तिकविभूषणा घनसारासारलिप्तगात्राः ।
क्षौमावगुण्ठिताः प्रमदा यावदभिसरन्ति प्रियम् ॥ )

राजा— (सोत्कण्ठं) किमिदानीं कान्तापि भगवतीमुद्युञ्जीत ।

विदूषकः— अहइं । (अथकिम् ।)

राजा— तदावामपि निगूढं[2] गच्छावः ।

विदूषकः— ता उट्ठेहि । (तदुत्तिष्ठ ।)

राजा - देव्या कालविलम्बं पृष्टः किं प्रतिब्रूयाम्[3] ।

विदूषकः— अज्ज भअवदीपत्थाणप(ज्जूसि? ज्जूसु)आ सा तुमं ण पुच्छादि एव्व । अहव राआ खु तुमं । ता जं किंवि कज्जं अवदिसेहि । (अद्य भगवतीप्रस्थानपर्युत्सुका सा त्वां न पृच्छत्येव । अथवा राजा खलु त्वम् । तद् यत्किमपि कार्यम् अपदिश ।)

१. 'ओ जाव,' ख. २. 'ढो ग' ख, व, ङ. ३ 'ब्रूयाः' क,

(राजा सनिःश्वासमुत्तिष्ठति । )

विदूषकः— इदो इदो भवं । (इत इतो भवान् । )

[उभौ परिक्रामतः । ]

(नेपथ्ये मृदङ्गध्वनिः । )

राजा – (श्रुत्वा सहर्षं) सखे! प्रवृत्तामिव प्रतिमानृत्तमपि ।

विदूषकः— (साटोपं पुरोऽवलोक्य) पेक्ख णिम्मक्खिअं पाआरदुवारं । ता झत्ति गच्छह्मो । [त्वरितं परिक्रामतः । ] (पश्य निर्मक्षिकं प्राकारद्वारम् । तद् झटिति गच्छावः । )

राजा — दैवादयमतिक्रान्तो दौवारिकान्तरायः ।

विदूषकः— [1]मह पहावादो त्ति भणाहि । एदं सिवगंगोज्जाणं जाव पविसामो । [ प्रवेशं रूपयतः । ] (मम प्रभावादिति भण । एतच्छिवगङ्गोद्यानम् । यावत् प्रविशावः । )

राजा— (विमृश्य सविस्मयं) अहो! सर्वङ्कषोऽयं[2] पञ्चशरपराक्रमप्रभावः । यः किल,

धीरं गभीरमवधीर्य निरङ्कुशं मां
प्रावीवृतन्महति बालिशचापलेऽस्मिन् ।
मुग्धां पुनः परवतीमतिकातरां ता-
मध्यापयत् कपटनाटकसंविधानम् ॥ ११ ॥

१. 'तुह' ख. २. 'यं परा' ख.

विदूषकः— दाणिं अप्पडिबंधो तुह मणरहो। (इदानीम् अप्रतिबन्धस्तव मनोरथः।)

राजा— (सप्रत्याशम्) सम्प्रति प्राणनायिकाप्राप्तिमाशंसामहे।

विदूषकः— माहवीणिउंजे खु ताए समओ किदो। ता णं उवसप्पद्म। [उपसर्पतः।] (माधवीनिकुञ्जे खलु तया समयः कृतः। तस्मान्ननूपसर्पावः)

[ततः प्रविशति सारसिका कलावती च।]

सारसिका— (सनिर्वेदम्) सहि! कळावदि! केत्तिअं काळं एआरिसिं मंदभाइणिं मं घेत्तूण अत्ताणं आआसइस्ससि। (सखि! कलावति! कियन्तं कालमेतादृशीं मन्दभागिनीं मां गृहीत्वा आत्मानमायासयिष्यसि।)

कलावती— सहि सारसिए! अज्ज एव्व भअवदीए पसादेण एसो गहो णिगह्लीअदि। ता कीस खिज्जासि। (सखि सारसिके! अद्यैव भगवत्याः प्रसादेन एष ग्रहो निगृह्यते। तत् कस्मात् खिद्यसे।)

राजा— (कर्णं दत्त्वा) अन्तर्निकुञ्जमालाप इव श्रूयते। तदिह-स्थावेव जानीवः। (पुरो[1]ऽवलोक्य सहर्षं) कथं प्रेयसीव मां प्रतीक्षते। तदस्या वचनावसरमुपलभ्य प्रविशावः।

विदूषकः— जं दे रुच्चइ। (यत् ते रोचते।)

[इति निकुञ्जद्वारोपान्ते निलीय स्थितौ।]

सारसिका— सहि! तुमं वि अजाणंती विअ मं गहाविट्ठेत्ति

---

१. 'रो वि' ख.

मंतअंती किं पीडेसि (सखि! त्वमपि अजानन्तीव मां ग्रहाविष्टेति मन्त्रयन्ती किं पीडयसि।)

कलावती— (सस्मितम्) ता किंणिमित्तं एत्थ आअदासि। (तत् किंनिमित्तमत्रागतासि।)

राजा—(स्वगतम्) इमं जनमनुग्रहीतुम्।

विदूषकः— (स्वगतम्) दक्खाअणं सुवो पहादे बह्मणीए परिभासणे णिपादइदुं। (दाक्षायणं श्वः प्रभाते ब्राह्मण्याः परिभाषणे निपातयितुम्।)

सारसिका— ण आणामि। (न जानामि।)

कलावती— (स्वगतम्) दिट्ठिआ महाराअस्स आअमणं से णाअक्खिदं[1]। अण्णहा अणाअमणे एसा ण जीविस्सदि। (प्रकाशम्) [2]णं भअवदीएँ[3] समीवं देवीए पेसिदासि। (दिष्ट्या महाराजस्य आगमनमस्यै नाख्यातम्। अन्यथा अनागमने एषा न जीविष्यति। ननु भगवत्याः समीपं देव्या प्रेषितासि।)

सारसिका— (अश्रुतिमभिनीय दीर्घमुष्णं च निःश्वस्य[4]) अह्मो! अप्पडिसमाहेओ मह हिअआवक्खेओ (अम्मो! अप्रतिसमाधेयो मम हृदयावक्षेपः।)

कलावती— (स्वगतम्) आदिभूमिं गदस्स से मअणातङ्कस्स को दाणिं पडिआरो। (विचिन्त्य) दक्खाअणहदओ वि पमत्तो।

---

१. 'दि त्ति' क. २. 'ण भ', ३. 'ए पेसि' ख. ४. 'स्य) अप्प' क.

राआणो वि कज्जसंततिपज्जाउळा । ता दाणिं का गई । (विमृश्य) होदु । एव्वं दाव । (प्रकाशम्) तत्तहोदिं लोअपावणिं वंदिअ आअच्छामो । ( अतिभूमिं गतस्यास्य मदनातङ्कस्य क इदानीं प्रतिकारः । दाक्षायणहतकोऽपि प्रमत्तः । राजानोऽपि कार्यसन्ततिपर्याकुलाः । तदिनानीं का गतिः । भवतु, एवं तावत् । तत्रभवतीं लोकपावनीं वन्दित्वा आगच्छावः । )

सारसिका— हळा सरळे ! ण सक्कं एदं । (हला सरळे! न शक्यमेतत् । )

कलावती— कुदो विअ । (कुत इव । )

सारसिका —कदावि अदिट्ठपुव्वं भअवदिं पुडमदंसणम्मि एव्व गहावेसो त्ति कवडाअरणेण कहं पदारेमि । अविअ सव्वण्णा सा भअवदी । झाणदिट्ठीए दट्ठूण मह चावळं पआसए वि । ता ण जुत्तं ताए पुरदो गंदुं । (कदाप्यदृष्टपूर्वां भगवतीं प्रथमदर्शन एव ग्रहावेश इति कपटाचरणेन कथं प्रतारयामि । अपिच, सर्वज्ञा सा भगवतीं । ज्ञानदृष्ट्या दृष्ट्वा मम चापलं प्रहसेदपि । तन्न युक्तं तस्याः पुरतो गन्तुम् । )

कलावती— (सभयं) णं मुद्धे अगमणे देवी कुप्पिस्सदि ! (ननु मुग्धे ! अगमने देवी कोपिष्यति । )

सारसिका— (सबाष्पगद्गदं) अदिसरळे अज्ज जीवंतीए खु सुवो देवीए भअं । (उभे अश्रूणि मुञ्चतः । ) (अतिसरले! अद्य जीवन्त्याः । खलु श्वो देव्या भयम् । )

विदूषकः— वअस्स ! पेक्ख तुइ से अणुराअमाहप्पं (वयस्य ! पश्य त्वय्यस्या अनुरागमाहात्म्यम् ।)

राजा — पश्यामि । कष्टमतिकरुणं वर्तते । यत् किल,

हृदि चिरविधृतं ह्रिया महत्या
निभृतमभून्नियतं भिया च देव्याः ।
अभिमतमवगत्य दुर्लभं तद्
विजनमुपेत्य विशिष्य रोदितीयम् ॥ १२ ॥

अपिच,

शिवशिव ! कुचयोरियं प्रकम्पाद्
रणरणकं विवृणोति पक्ष्मलाक्षी ।
प्रसभमुदयता च सूत्कृतेन
प्रकटयते गुरुमान्तरं च तापम् ॥ १३ ॥



सारसिका हा देव्व ! तपस्सिणिम्मि सारसिआअं एव्व कहं बद्धमच्छर सि । (नासाग्रे तर्जनीं कृत्वा) [1]हद्धि हद्धि ! देव्वहदस्स जणस्स सव्वं वि पडिऊळं संपज्जइ । जं मह संपदं, (हा दैव ! तपस्विन्यां सारसिकायामेव बद्धमत्सरमसि । हाधिक् ! हाधिक् ! दैवहतस्य जनस्य सर्वमपि प्रतिकूलं सम्पद्यते । यन्मम साम्प्रतम् ।)

(संस्कृतमाश्रित्य)

एते किरन्ति परितः किरणा हिमांशोः
क्रूराणि हन्त ! गरलानि ममाङ्गमङ्गम् ।
एते च मन्दमरुतां विसराः कठोराः
[2]संवर्मयन्ति बत [3]मुर्मुरवह्निना माम् ॥ १४ ॥

---

१. 'हद्धि देव्व' ख. ङ  २. 'संमर्दयन्ति' क.  ३. 'दुर्दुर' क.

कलावती-- पज्जवत्थावेहि अत्ताणं । (पर्यवस्थापय आत्मानम् ।)

सारसिका — [अश्रुतिमभिनीय] महाभाअ! [इत्यर्धोक्ते मुह्यति ।] (महाभाग ! )

विदूषकः — हाद्धि! हाद्धि! किंवि उल्लवंती मुच्छादि । (हाधिक् हाधिक् ! किमप्युल्लपन्ती मूर्च्छति ।)

राजा— (सकरुणं पश्यन् ) कठोरग्रहादपि घातुकः कामहतकः । यतः,

क्रमेणाङ्गान्यस्याः क्रशयति कृशान्येव सुदृशो
महिम्ना पाण्डिम्नश्छुरयति वपुः काञ्चननिभम् ।
अपि प्रश्ने सख्याः प्रतिवचनमाख्यापयति न
भ्रमोल्लापैरेनां मुखरयति सम्मोहयति च ॥ १५ ॥



कलावती — (सबाष्पं) सहि! समस्ससहि, समस्ससहि । (सखि! समाश्वसिहि, समाश्वसिहि ।)

सारसिका — (समाश्वस्य शिरस्यञ्जलिं बद्ध्वा) भअवं कुसुमाउह! मह जीविदादो अवरं ण हु तुह अपहरणिज्जं । इमस्सि एव्व दाणिं णिरासह्मि । (कलावतीं विलोक्य) हळा कळावदि! एत्तिअं कालं मंदभाइणीए मह किदे बळिअं खु तुए अप्पा पीडिओ । ता पिअसहीए सारसिआए एसो पच्छिमो परिस्संगो । (परिष्वज्य सकरुणं) हा देवि पिअसारसिए अकाळणदआलुए गुणेक्कपक्खपादिणि ! इदो वरं असुळहं तुह सारसिआदंसणं । (साक्रन्दं) हा ताद ! हा अज्जुए ! कहिं णु कहं वा वट्टह । अहं उण मंदभाइणी एआइणी एव्वं विपज्जेमि । हा तत्तहोदि मेत्ताअणि ! ण आणासि तुह वच्छाए

१. 'वात' क. २. 'श्छुर' क. ३. 'सहि । सार–' ङ. ४. 'आए सो प' ख. ग.

एआरिसिं दसं । हा भअवदि ! मंदभाइणी तुए सह संगच्छेमि ।

(भगवन् ! कुसुमायुध ! मम जीवितादपरं न खलु तवापहरणीयम् । अस्मिन्नेवेदानीं निराशास्मि । हला कलावति ! एतावन्तं कालं मन्दभागिन्या मम कृते बलवत् खलु त्वयात्मा पीडितः । तत् प्रियसख्याः सारसिकाया एष पश्चिमः परिष्वङ्गः । हा देवि प्रियसारसिके अकारणदयालुके गुणैकपक्षपातिनि ! इतः परमसुलभं तव सारसिकादर्शनम् । हा तात ! हा अज्जुके ! कुत्र नु कथं वा वर्तेथाम् । अहं पुनर्मन्दभागिनी एकाकिनी एवं विपद्ये । हा तत्रभवति ! मैत्रायणि ! न जानासि तव वत्साया एतादृशीं दशाम् । हा भगवति ! मन्दभागिनी त्वया सह संगच्छे ।)

कलावती— ( स्वगतम् ) का णाम एदाओ इमाए । (का नामैता अस्याः । )

राजा— द्रवयति परिदेवितैरिदानीं
द्रुमदृषदावपि हन्त ! दीनदीनैः ।
तदपि च तदिदं कठोरभावः
परिकलयन् प्रणयं विभावयामि ॥ १६ ॥

विदूषकः— अच्चाहिदे चिरपरिचिदं सजणं एसा सुमरिदवदी । (अत्याहिते चिरपरिचितं स्वजनमेषा स्मृतवती । )

कलावती— सहि ! एत्तिअं मंतअंतीए किं दाणिं अज्झवसिदं । (सखि ! एतावन्मन्त्रयन्त्या किमिदानीमध्यवसितम् । )

सारसिका— (अश्रुतिमभिनीय) सहि कळावदि ! मह कावि अणुत्तरा विण्णत्ती तुए अवस्सं णिव्वट्टणिज्जा । (सखि कलावति ! मम कापि अनुत्तरा विज्ञप्तिस्त्वया अवश्यं निर्वर्तनीया । )

---

१. 'ह अहं वि सं' ख. ग. घ.

कलावती— (सास्रं) भणाहि कठोरे[1]! भणाहि । (भण कठोरे भण ।)

सारसिका— (सगद्गदम्) मह हिअअकुंभीळअं महाभाअं गदुअ एकंते वंदिअ विण्णवेहि । जह– दुळ्ळहं तुमं एव्व वळ्ळहं ळंभिदुकामाए णिअमिदकरणग्गामाए उववासकिसंगीए तुह विरहाणळम्मि पिअदरावि पाणसंहदी[2] आहुदीकिदा ! ता मह किदे कावि तवस्सिणी एव्व जादेत्ति मणसि सुमरिदव्वो अअं जणो महाराएणेत्ति। (मम हृदयकुम्भीलक महाभागं गत्वा एकान्ते वन्दित्वा विज्ञापय । यथा– दुर्लभं त्वामेव वल्लभं लम्भितुकामया नियमितकरणग्रामया उपवासकृशाङ्ग्या तव विरहानले प्रियतरापि प्राणसंहतिराहुतीकृता । तन्मम कृते कापि तपस्विनी एवं जातेति मनसि स्मर्तव्योऽयं जनो महाराजेनेति । )

राजा—

आलोलमानलुलितालकमश्रुपातै-
रासिक्तदुर्बलकपोलमसीमधारैः ।
आकम्पितस्तनमरुन्तुददैन्यवाद-
मा: ! कीदृशं व्यवसितं सुदृशा कृते नः ॥१७॥

तदलं विलम्बेन ।

कलावती— तुमं एव्व महाराअं विण्णवेहि । दाणिं एव्व दक्खाअणो तं आणेस्सदि । (त्वमेव महाराजं विज्ञापय । इदानीमेव दाक्षायणतस्मानेष्यति । )

सारसिका— (सशिरःकम्पं) किं दाणिं वि आसासणक्खराइं होदु । इदो परं ण काळं विळंबेदुं पारेमि । ता इमादो णिउंजादो

1. 'रे! । सार–' ङ. 2. 'संहीए' क. घ. ङ., 'संहिदीए' ग.

णिक्कमिअ इमं एव्व उत्तवंतं भअवंतं मिअंकं णीसंकं पेक्खंती जहसमीहिदं करिस्सं । [इति निकुञ्जद्वाराभिमुखी गच्छति । ] (किमिदानीमपि आश्वासनाक्षराणि । भवतु । इतः परं न कालं विलम्बितुं पारयामि । तदस्मान्निकुञ्जान्निष्क्रम्य इममेवोत्तपन्तं मृगाङ्कं निश्शङ्कं प्रेक्षन्ती यथासमीहितं करिष्ये । )

[ कलावती सास्रमनुसरति । ]

राजा— (सरभसंमभ्युपेत्य)[1] अयि सरले ! कृतं कृतं साहसेन ।

वरतनु ! सुकुमारां मा कठोरैस्तनुं ते
  परिमृशतु[2] कराग्रैः पातकी पद्मवैरी ।
विरहविधुरकोकीलोकशोकाभिताप[3]-
  स्फुटघटितकलङ्को नैष दोषाकरः किम् ॥ १८ ॥

( उभे राजानं दृष्ट्वा सहर्षादुभुतसंभ्रमं तिष्ठतः । )

कलावती— जेदु महाराओ । (सारसिकां प्रति) अस्सिं वि अच्चाहिदे तुह जीविदपज्जवत्थावइत्तअं अणुपहदआलुअं[4] महाराअं वि अए! ण वड्ढावेहि । (जयतु महाराजः । अस्मिन्नप्यत्याहिते तव जीवितपर्यवस्थापयितारम् अनुपघदयालुकं महाराजमपि अये ! न वर्धापयसि । )

[ सारसिका बाष्पमवमृज्य राजानं सप्रणयं पश्यन्ती लज्जया मुखमवनमयति । ]

राजा— कलावति ! वर्धितोऽहमस्याः प्रणयावलोकनेनैव । कुतः,

---

१. 'समुपेत्य' ख. ग.    २. 'मृशति' क. ङ.    ३. 'काभिशाप' क. ग. घ. ङ.    ४. 'अणहदआलु' क. ग. घ. ङ.

मनसिजविशिखानामाशिखं कीलितानामदयमुदयमानैर्वेदनैर्दूनमेनम् ।
अमृतलहरिकाणां सोदरैरादरेण
क्षणमपि मदिराक्षी वीक्षते यत् कटाक्षैः ॥ १९ ॥

विदूषकः— कळावदि ! तुह सहीए जारिसो गहो तारिसो एव्व मंतिओ मए सण्णिहाविदो । [कलावती हसति । राजा स्मयते । सारसिका लज्जते । ] ता जावग्गहणिग्गहं एत्थ एव्व सुहेण णिद्देमि [निकुञ्जद्वारि शयनं नाटयति ।] (कलावति! तव सख्या यादृशो ग्रहः तादृश एव मन्त्रितो मया सन्निधापितः । तद् यावद्ग्रहनिग्रहमत्रैव सुखेन निद्रामि ।)

कलावती— (सस्मितं) सहि! एत्तिअम्मि वि अच्चाहिदे रत्तिम्मि पादआरेण आअदुअ एव्वं उवकरंतस्स[1] महाराअस्स उइदं पच्चुवआरं करेहि । (सखि! एतादृशेऽत्याहिते रथ्यायां पादचारेणागत्य एवमुपकुर्वतो महाराजस्य उचितं प्रत्युपकारं कुरु ।)

सारसिका— (स्वगतम्) कहं इमस्स असण्णिहाणे किंवि किंवि उल्लिहन्ती दाणिं कस्स वि ण प्पहवामि । (कथमस्यासन्निधाने किमपि किमपि उल्लिखन्ती इदानीं कस्यापि न प्रभवामि ।)

कलावती— (सस्मितं) हला सारसिए! सङ्कप्पपरिकप्पिदे जस्सिं जाइं जाइं चमक्किदाइं तेसु किंवि तस्सि पच्चक्खे दंसेहि । [राज्ञो हस्तं सारसिकया ग्राहयति । सारसिकाराजानौ शृङ्गारचेष्टां नाटयतः ।] (हला सारसिके! सङ्कल्पपरिकल्पिते यस्मिन् यानि यानि चमत्कृतानि तेषु

1. 'इस्स एव्वं' क. ग. व. ङ.

किमपि तस्मिन् प्रत्यक्षे दर्शय। )

कलावती— (संस्कृतमाश्रित्य )

उन्निद्रसप्तदलसौरभमेदुरं त-
दुद्यानकुञ्जमिदमुज्ज्वलपुष्पशय्यम् ।
उद्द्योतमानशशिनी शरदश्च रात्रि-
रुल्लासयेन्न कथमुत्सुकयोर्विलासम् ॥२०॥

राजा— स्फुटं परिहसिताः स्मः ।

सारसिका — अइ असबद्धप्पळाविणि! अवेहि । (अयि असम्बद्धप्रलापिनि! अपेहि । )

कलावती — (सस्मितं) णं तुह्माणं मए पडिबंधो । ता गमिस्सं । [निकुञ्जान्निर्गच्छति ।] (ननु युवयोर्मया प्रतिबन्धः । तद् गमिष्यामि ।)

सारसिका— (सरोषमिव) कहं एआइणिं मं विसज्जिअ गच्छेसि । (कथमेकाकिनीं मां विसृज्य गच्छसि ।)

कलावती– (सस्मितं) सहि! तुमं एव्व जाणाहि अह्माणं का एआइणि त्ति । (सखि! त्वमेव जानासि आवयोः का एकाकिनीति ।)

विदूषकः— कळावदि! मा खिज्जेहि । अहं तुह सहाओ होमि । ( कलावति! मा खिद्य । अहं तव सहायो भवामि । )

कलावती— (साधिक्षेपं) हदास! मा मुहरेहि । [बहिः प्रस्थिता । ( हताश! मा मुखरय । )

---

१. 'मेदुरान्तमुद्यान' .. घ. ङ.

राजा—

भीरु! कुतस्ते भीतिः सेवितरि सतीह वसुमतीपाले।
अविशङ्कमाशु तदिमं शीतलय जनं शिरीषमृदुलाङ्गि ॥२१॥
[ नायिकामुपश्लेषयति । ]

सारसिका— ( स्वगतम् ) अम्मो! एदस्स [1]अंगसंगमसुहादो अत्तणो वि ण प्पहवामि। ( अम्मो! एतस्य अङ्गाङ्गसङ्गमसुखादात्मनोऽपि न प्रभवामि। )

राजा— ( स्पर्शसुखमभिनीय ) अयि[2] प्रिये!

चन्दनममृतं चन्द्रो मन्दमरुत्तुहिनगिरिगुहागगनम्।
नियतमुपादित मदनो भूतान्येतानि तव सृजन्मूर्तिम् ॥२२॥
( उपगूहितुमिच्छति। )

सारसिका— ( सलज्जमङ्गानि सङ्कोचयन्ती ) माणद! मा खु अविणअं करेहि। ( मानद मा खल्वविनयं कुरु। )

राजा—

कल्याणि! नैष समयो महतां विगीतैः[3]
कामप्रभावपरिभावकृता ह्रियालम्।
नन्वेष भीरु! हृदयादपि निर्विशेष-
स्तत् किं विलम्बयसि शम्बरवैरिलीलाम् ॥२३॥

किञ्च,

त्वं मे विलासपरिकल्पनकल्पवल्ली
त्वं मे मनोभवरुजः प्रशमौषधी च।
आलिङ्ग पीनकठिनस्तनि! निर्विशङ्क-
मातश्च विघ्नबहुलानि हि मङ्गलानि ॥२४॥

---

१. 'अंगसंग' ख. २. 'यि प्रेयसि!' ग. ३. 'तिः' ग.

सारसिका— (सस्मितम्) णाह! पहुणो तुह पक्खवादे कहं विग्घप्पसंगो । (नाथ! प्रभोस्तव पक्षपाते कथं विघ्नप्रसङ्गः । )

राजा — ननु प्रकृतिसरले! ममापि प्रभवति देवी ।

[ ततः प्रविशति देवी चन्द्रकला च । ]

चन्द्रकला— अह्मो! तुह्माणं भत्तिसंजोओ भअवदिम्मि । जं अज्जाए[1] दीपम्बाए तत्तहोदीए अ तं पत्थावेदुं रत्तिम्मि वि सअं एव्व आअदुअ एत्तिअं कालं ठिदं । (अम्मो! युष्माकं भक्तिसंयोगो भगवत्याम् । यदार्यया दीपाम्बया तत्रभवत्या च तां प्रस्थापयितुं रात्रावपि स्वयमेवागत्य एतावन्तं कालं स्थितम् । )

देवी— सहि! तारिसी खु वच्छळदा अह्मेसु तत्तहोदीए । जं पत्थादुकामाए ताए तह तह पज्जवत्थाविदा वि जणणीए विस्सिळिस्संती दारिआ विअ एत्तिअं उक्कण्ठेमि । (सखि! तादृशी खलु वत्सलता अस्मासु तत्रभवत्याः । यत् प्रस्थातुकामया तया तथा तथा पर्यवस्थापितापि जनन्या विश्लिष्यन्ती दारिकेव एतावदुत्कण्ठे ।

चन्द्रकला— होदि! तुमं कहं वि सहिस्ससि । ण उण अय्या दीपम्बिआ । (भवति! त्वं कथमपि सहिष्यसे । न पुनरार्या दीपाम्बिका । )

देवी – एव्व एदं । अदो क्खु एआदसो[2] जाअरणं उद्दिसिअ ताए सळ्ळवंतो तहिं एव्व चिट्ठइ । अहं उण अस्सत्थसरीरं अय्यउत्तं परामरिसिदुं पेसिदाह्मि । (एवमेतत । अतः खलु एतादृशं जागरणमुद्दिश्य तया सल्लपन्ती तत्रैव तिष्ठति । अहं पुनः अस्वस्थशरीरम् आर्यपुत्र परामष्टुं

1. 'अज्जदीप' ख.   2. 'दसं' ख.

प्रेषितास्मि ।)

चन्द्रकला— महंतो खु काळो अदिक्कंतो तुह्माणं अण्णोण्ण-सल्लावेहिं । (महान् खलु कालोऽतिक्रान्तो युष्माकमन्योन्यसल्लापैः।)

देवी— (साशङ्कं) ता एत्तिअम्मिं[1] वि काळे सारसिआ णाअदा। (तावदेतावत्यपि काले सारसिका नागता।)

चन्द्रकला— ण जाणीअदि । (न ज्ञायते।)

देवी— (सोद्वेगं) दुट्ठग्गहाविट्ठाए ताए किं वा अच्चाहिदं त्ति वेवदि मे हिअअं । दुष्टग्रहाविष्टायास्तस्याः किं वा अत्याहितमिति वेपते मे हृदयम्।)

चन्द्रकला— णं भअवदीए एव्व झाणदिट्ठीए दट्ठूण भणिदं–गहो एव्व ताए[2] ण होदि । मा भाआहि त्ति। (ननु भगवत्यैव ज्ञान-दृष्ट्या दृष्ट्वा भणितम् ग्रह एव तस्या न भवति, मा बिभेहि इति।

देवी— जदि एव्वं कुदो सा ण दीसइ। (यद्येवं कुतः सा न दृश्यते।)

चन्द्रकला— उज्जाणप्पिआ खु सारसिआ । ता किं वि दट्ठूण चिट्ठिस्सदि । (उद्यानप्रिया खलु सारसिका। तत्किमपि पश्यन्ती स्थास्यति।)

देवी— ता एत्थ विचिणुस्सामो ।(तदत्र विचेष्यावः।)

चन्द्रकला— तह। (तथा।)

---

१. 'म्मि का' ग, ङ. २. 'ताए किदणिग्गहो मा' क. ग. घ. ङ.

[इति विचयननाटितकेन परिक्रामतः । ]

राजा— तथापि,

यैषा साम्राज्यश्री-
र्यद् बलमेतद् य एषं कोशो वा ।
ये चामी वयमखिलं
तरुणि! तवाक्षिभ्रुवस्य वश्यमिदम् ॥ २५ ॥

देवी— (कर्णं दत्त्वा ससम्भ्रमम्) अय्यउत्तो माहवीणिउंजे मंतेदि विअ । ता पस्सदो णिळीअ पेक्खह्मो । [निरूपणनाटितकेनावलोक्य सोद्वेगं] हद्धि! हद्धि! पमादो पमादो । (आर्यपुत्रो माधवीनिकुञ्जे मन्त्रयत इव । तत् पार्श्वतो निलीय पश्यावः । हा धिक्! हा धिक्! प्रमादः प्रमादः ।)



चन्द्रकला— (सविस्मयम्) कहं सारसिअं उद्दिसिअ एव्व महाराअस्स एदं वअणं । (कथं सारसिकामुद्दिश्यैव महाराजस्येद वचनम् ।)

देवी— आम सहि! । (आम सखि ! ।)

चन्द्रकला— भट्टिणि ! जं तुए संकिदं तं तहव्व जादं । (भट्टिनि ! यत् त्वया शङ्कितं तत् तथैव जातम् ।)

[देवी दीर्घं निःश्वसिति ।]

राजा— अयि प्रेयसि !

लावण्याम्बुनिधिं विमथ्य सुचिरं तारुण्यमन्थाद्रिणा
कन्दर्पाम्बुजलोचनेन विहितं त्वद्रूपपात्रान्तरे ।

---

१. 'ष धनविभवः । कोशो वा ये' क॰ ङ. २. 'हद्धि! पमादो । चन्द्र-' क. ग. घ. ङ. ३. 'पमादो । चन्द्रकला— जं तुए' क. ङ.

प्रत्यग्रं मधुराधरामृतरसं यत्सत्यमास्वाद्य-
न्निन्द्राणीगृहमेधितामपि तृणायाहं न मन्येऽधुना ॥ २६ ॥

(इति सारसिकावदनमुन्नमयति ।

[सारसिका सलज्जं सविलासं च नाट्येन परिहरते । ]

देवी— (सशिरःकम्पं) चंदअले! दिट्ठं दट्ठव्वं । सुदं सोदव्वं । एसो सारसिआए गहो । एसा अय्यउत्तस्स अस्सत्थदा । (सगद्गदं) अम्मो विहे! णिरंकुसो तुह पहावो । जं होसळकुळेंदुणो वि अण्णसंकंताइं विब्भमक्खराइं दीसंति । (चन्द्रकले! दृष्टं द्रष्टव्यम् । श्रुतं श्रोतव्यम् । एष सारसिकाया ग्रहः । एषा आर्यपुत्रस्यास्वस्थता । अम्मो विधे! निरङ्कुशस्तव प्रभावः । यद् भोसलकुलेन्दोरपि अन्यसंक्रान्तानि विभ्रमाक्षराणि दृश्यन्ते । )

चन्द्रकला— चिरेण खु काळेण एदाणं परिणदो विअ पणओ दीसइ । ता एदं ण काकताळिज्जं । (चिरेण खलु कालेनैतयोः परिणत इव प्रणयो दृश्यते । तदिदं न काकतालीयम् । )

देवी— एव्वं एदं । (एवमेतत । )

राजा— अहमिदानीं,

कण्ठे भुजेन सुदृढं विनिवेशितेन
वक्षोरुहौ परिमृशन् मुहुरेककेन ।
हस्तेन वक्त्रमितरेण समुन्नमय्य
[1]निर्वर्णयन् विलसितं तव निर्वृणोऽस्मि ॥ २७ ॥

---

१, 'संव' क. ङ.

देवी — इदो वरं पेक्खिदुं ण पारेमि । उवक्खिअ गदं वि मं पच्चा सठो चाडुएर्हिं अदिसंधिस्सादि । ता होदु एव्वं दाव । (किंचिदुच्चैः) महाराअ! णिव्वुणुहि णिव्वुणुहि । (इतः परं प्रेक्षितुं न पारयामि । उपेक्ष्य गतामपि मां पश्चाच्छठश्चाटुकैरतिसन्धास्यति । तद्भवत्वेवं तावत् । महाराज! निर्वृणु निर्वृणु ।)

राजा— (सभयसम्भ्रमं सारसिकामवमुच्य) कथं देव्येव शृण्वती मन्त्रयते ।

[सारसिका सातङ्कसम्भ्रमं निर्गच्छन्ती विदूषके चरणाभिघातं रूपयति ।]

विदूषकः— (उत्थाय निद्राभिभवमभिनयन्) वअस्स! किं मं ताडेसि । उइदो खु तुमं सारसिआए संघडअंतस्स मह एसो पडिआरो । (वयस्य! किं मां ताडयसि । उचितः खलु त्वां सारसिकया सङ्घटितवतो ममैष प्रतिकारः ।)

चन्द्रकला— सहि! सुणाहि । (सखि! शृणु ।)

देवी— होदु । पुढमं इमं एव्व बह्मबंधुअं सिहाअं गह्ण । (भवतु । प्रथममिममेव ब्रह्मबन्धुकं शिखायां गृहाण ।)

विदूषकः— (प्रबुद्धय सोद्वेगं स्वगतं ।) कहं एत्थ देवी । कहिं णु वअस्सो भवे । (विमृश्य) जं किं वि होदु । दाणिं जंघाबळं एव्व सरणं । [पलाय्य निलयनं नाटयति । चन्द्रकला अनुधावति ।] (कथमत्र देवी । कुत्र नु वयस्यो भवेत् । यत् किमपि भवतु । इदानीं जङ्घाबलमेव शरणम् ।)

---

१. 'गदं मं' घ. ङ. २. 'डुहिं' घ. ३. 'णुहि । राजा— ङ. ४. 'हि सुणाहि' । ग. घ. ५. 'मं एव्व' ख. ६. वी । अह कहिं' ख. ग. घ.

कलावती— (विलोक्य सातङ्कं) हद्धि[1]! हद्धि[2]! अणवहिदाए मए संविहिदस्स कवडणाडअस्स अण्णहेव्व णिव्वहणं समावण्णं। (हा धिक्! हा धिक्! अनवहितया मया संविहितस्य कपटनाटकस्य अन्यथैव निर्वहणं समापन्नम्)

देवी— कळावदि! तुह खु एदं मदिकोसळं। (कलावति! तव खल्विदं मतिकौशलम्।)

कलावती— भट्टिणि! ण किंवि मए जाणीअदि। आदिदो आरहिअ सुणादु तत्तहोदि। (भट्टिनि! न किमपि मया ज्ञायते। आदित आरभ्य श्रृणोतु तत्रभवती।)

देवी— सुदं दिट्ठ अ। (श्रुतं दृष्टं च।)

कलावती— ण खु भट्टिणीए पडिवअणं। (न खलु भट्टिन्याः प्रतिवचनम्।)

देवी— (राजानमुपेत्य) अय्यउत्त! (इत्यर्धोक्ते) महाराअ! दिट्ठिआ वड्ढसि मणरहळाहेण। (आर्यपुत्र! महाराज! दिष्ट्या वर्धसे मनोरथलाभेन।)

राजा— (स्वगतम्)

मानग्रहो भवति भर्तृषु वल्लभानां
 ताश्च क्रमैरनुनयन्ति कथञ्चिदेते।
इत्येव संश्रृणुमहे न तु निर्विशामो
 हा हन्त! सम्प्रति तदापतितं कथं नः ॥२८॥

---

१. 'हद्धि अण' क. २. 'हु' घ. ङ.

तत् किमिदानीं करणीयम् । भवत्वेवं तावत् । (प्रकाशम्) देवि को-ऽयमपूर्वो वर्धनाप्रकारः ।

देवी— (सहासं) णं तुमं दाणिं अपुव्वोऽसि । (ननु त्वमिदानी-मपूर्वोऽसि । )

राजा[1]— (सस्मितं) देवि! प्रणयप्रकर्षः परिचितमपि वस्तु प्रति-क्षणमपूर्वयति ।

देवी - णं पक्खादो पणओ । (ननु प्रख्यातः प्रणयः । )

राजा— किमप्रतिपन्नस्तत्रभवत्या मयि प्रणयः, यो व्याख्यान मपेक्षते ।

देवी— केण सिक्खाविदोसि एदं सरणिं । (केन शिक्षापितो-ऽसि एतां सरणिम् । )

राजा— तत्रभवत्यैव ।

देवी— (स्वगतं) तक्केमि सारसिअं णिगूहंती अहं एव्व कवडा-अरणे उवज्झाए त्ति उवालद्धम्हि । (प्रकाशं) *चाडुआर! अलं आला-वेहिं । (सक्रोधं परावृत्य कलावतीं दृष्ट्वा) अह्मो! मूसिआए मुहे अपू-पिआ रक्खणाअ णिक्खित्ता । (तर्कयामि सारसिकां निगूहन्ती अहमेव कपटाचरणे उपाध्यायेति उपालब्धास्मि । चाटुकार! अलमालापैः । अहो! मूषिकाया मुखे अपूपिका रक्षणाय निक्षिप्ता । )

कलावती— ण मे वअणावसरो ! (न मे वचनावसरः ।)

---

१. 'जा— देवि' ख.

---

* इत आरभ्य चतुर्थाङ्कान्तं प्रभ्रष्टं गपाठे ।

देवी — भणाहि[1] भणाहि । (भण भण ।)

चन्द्रकला-- (सनिःश्वासमागत्य) कहिं वि[2] णिळीणो सो बह्म-बंधू । (कुत्रापि निलीनः स ब्रह्मबन्धुः ।)

कलावती — (स्वगतम्) एदं वि मह वअणस्स अणुऊळं एव्व । (प्रकाशं) भअवदीसमीवं गच्छंतीओ अह्मे दक्खाअणं दट्ठूण णिउंजे णिळीणाओ । तदो सो वि तहिं एव्व आअंतु उज्जुत्तो । (इदमपि मम वचनस्यानुकूलमेव । भगवतीसमीपं गच्छन्त्यौ आवां दाक्षायणं दृष्ट्वा निकुञ्जे निलीने । ततः सोऽपि तत्रैवागन्तुमुद्युक्तः ।)

देवी — सुणामो दाव । (शृणुमस्तावत् ।)

कलावती — तदो[3] मए णिउंजादो णिग्गमिअ सव्ळावावदेसेण एत्थ एव्व ठाविदो णिद्दं पत्तो अ । (ततो मया निकुञ्जान्निर्गम्य सल्लापापदेशेनात्रैव स्थापितो निद्रां प्राप्तश्च ।)

चन्द्रकला— तदो किं विळंबे काळणं । (ततः किं विलम्बे कारणम् ।)

कलावती — तदो अ ण हु दक्खाअणो एक्को आअच्छदि त्ति इदो तदो पेक्खिदुं किंचिद् दूरं गदह्मि । तहिं अंदरे एव्वं जादं । (ततश्च न खलु दाक्षायण एक आगच्छतीति इतस्ततः प्रेक्षितुं किञ्चिद् दूरं गतास्मि । तदन्तरे एवं जातम् ।)

राजा— (स्वगतं) कलावति! निपुणासि, यत् प्रतिभया स्वदोषं परिहृतवती ।

---

१. 'णाहि । चन्द्र-' ख ङ. २. 'वि अहिळीणो' ख ३. 'दो अ णिउंजादो ण हु दक्खाअणो' क. घ. ङ.

सारसिका— (स्वगतं) कळावदि! मुद्धाए मह चावळं एव्वं तुए णिगूहिदं वि पआसं एव्व आसी । (कलावति! मुग्धाया मम चापलमेवं त्वया निगूहितमपि प्रकाशमेवासीत् ।)

चन्द्रकला — (अपवार्य) सहि! एदाए उवरि ण दोसो फुरइ । (सखि! एतस्या उपरि न दोषः स्फुरति ।)

देवी— महाराअ! तुह मए महंतो खु पडिबंधो । ता सुहेण कीळेहि । [इति चन्द्रकलया सह गच्छति ।] (महाराज! तव मया महान् खलु प्रतिबन्धः । तत् सुखेन क्रीड ।)

[सारसिका[1] कलावत्या सह सव्रीळमनुव्रजति । ]

राजा— (स्वगतं) कथं कुपितेव गच्छति । (प्रकाशं) देवि! कथमाकर्णनीयमनाकर्ण्य जिगमिषसि ।

देवी— णं एत्तिअं काळं आअण्णिदं । (नन्वेतावन्तं कालमाकर्णितम् ।)

राजा — तर्हि प्रसादये भवतीम् ।

देवी— (सक्रोधं परावृत्त्य) जाए तुमं अक्खिब्भुवस्स किंकरो तं पसादेहि । [सारसिकां हस्ते गृह्णती] सारसिए! से पसण्णा होहि । (यस्यास्त्वमक्षिभ्रुवस्य किङ्करस्तां प्रसादय । सारसिके! अस्य प्रसन्ना भव ।

सारसिका-- (सोद्वेगं स्वगतं) हद्धि! हद्धि! हत्थट्ठिदमुसिदवत्थुणो जामिअगहिदस्स कुंभीळअस्स दसं अणुहोमि । (हस्तस्थितमुषितवस्तुनो यामिकगृहीतस्य कुम्भीलकस्य दशामनुभवामि ।)

---

१. 'का चन्द्रकलया सह सव्रीडमनुसरति' क. ङ.

राजा— (स्वगतं) हन्त! ममेयं निखिलमुदन्तमवगतवती । तत् कथं प्रतिविधेयम् । भवत्वेवं तावत् । (प्रकाशम्)

प्रसन्नासीः[1] प्रभोः स्वेषु नियोगो[2] हि प्रसन्नता ।
त्वयावां विहितौ वश्यौ यत्प्रसाद्यौ[3]प्रसादकौ ॥ २९ ॥

देवी— (सरोषसम्भ्रमं) कामुअ! ण तुमं वाहरसि । किंदु कामो एव्व वाहरावेदि । (कामुक! न त्वं व्याहरसि । किन्तु काम एव व्याहारयति ।)

राजा— (सभयमात्मगतम्) अहो! पुनरिदानीमभूतपूर्वमिदं रूपं देव्याः । तत् सत्यं कुपितैषा । तथाहि–

भ्रूभङ्गै[4]र्विहृतिं दधाति निटिलस्याधस्पदे कौटिली
काऽप्येष प्रसरीसरीति सुदृशः कोणे दृशोः शोणिमा ।
निःश्वासो निबिडोष्मलत्वमयते बिम्बाधरः स्पन्दते
वक्षोजौ बत! वल्गतो वपुरपि स्वेदाः परिष्कुर्वते ॥ ३० ॥

देवी— चंदअळे! खणं वि दाणिं एत्थ ण सक्कुणोमि ठादुं । ता भवणमग्गमादेसहि । (चन्द्रकले! क्षणमपि इदानीमत्र न शक्नोमि स्थातुम् । तद् भवनमार्गमादेशय ।)

चन्द्रकला— इदो इदो भवदी । (इत इतो भवती ।)

देवी— (सहुङ्कारं विदूषकपदवीं पश्यन्ती) बह्मबंधो! कहिं गमिस्ससि । [इति चन्द्रकलया सह प्रस्थिता ।] (ब्रह्मबन्धो! कुत्र गमिष्यसि ।)

---

१. 'न्नासि प्र' क. २. 'नियोगेषु' क. ३. 'द्यप्र' ख. ४. 'भ्रूभङ्गै' ख.

सारसिका— (सनिर्वेदं स्वगतम्) अह्मो! देव्वस्स दुव्विळसिदं! जं सा एव्व मं एव्वं विसज्जिअ गच्छेदि । (प्रकाशं) कळावदि! अणुपदं एव्व देवीए गच्छह्म । [इति निष्क्रान्तः स्त्रीवर्गः । ] (अहो! दैवस्य दुर्विलसितम् । यत् सैव मामेवं विसृज्य गच्छति । कलावति! अनुपदमेव देव्या गच्छावः । )

राजा— कथमप्रसन्नैव गतवती तत्रभवती । (विमृश्य)

कुलीनानां चेतः कुसुमसुकुमारं प्रणयिनः
प्रमादान्नोक्तीनामहह! परिहासेऽपि सहते ।
तदेवं प्रत्यक्षं किल दुरपलापं कृतवती
व्यलीकं सा देवी व्यपनयतु कोपं मयि कथम् ॥ ३१ ॥

तत् किमिदानीं करिष्यामि ।

विदूषकः— (एकं प्रपदं भूमावाकर्षन्नुपसृत्य) वअस्स मह पाणाणं आअदो मिच्चू चळणेण गदो । [पङ्गुवत् परिक्रामति ।] वयस्य! मम प्राणानामागतो मृत्युश्चरणेन गतः । )

राजा – दाक्षायण! भवान् रुदन्तमपि हासयितुं प्रभवति ।

विदूषकः— (दन्तान् प्रकटय्य ससीत्कारं) सच्चं एव्व मे पळाअंतस्स कंटएहिं विक्खदं चळणम् । ता एहि घरं एव्व सिग्घं गच्छह्म । (सत्यमेव मे पलायमानस्य कण्टकैर्विक्षतं चरणम् । तदेहि गृहमेव शीघ्रं गच्छावः । )

राजा – (सानुशयम्)

उदयारुणारुणनिभे
देव्या वदने पुरः स्फुरति ।

---

१. 'एदत्र गच्छह्म' ब. ङ. २. 'वाक्षिपन्तु' क ब. ङ. ३. 'अदो वि चळ' क. ङ.

प्राभातिकेन्दुसदृशं
सारसिकाया मुखं मया दृष्टम् ॥ ३२ ॥

विदूषकः— (सकरुणम्) अविणाम सुवो[1] वि सारसिआए मह अ जीवंताणं पउत्तिं सुणुस्ससि । (अपिनाम श्वोऽपि सारसिकाया मम च जीवतोः प्रवृत्तिं श्रोष्यसि । )

राजा— ( विमृश्य सनिःश्वासं )
स्पष्टं भयमिह भावि　　( निमित्तं सूचयित्वा साश्वासं )
[2]स्फोटास्पदमक्षि दक्षिणं तदपि ।

अथवा,

ईहातीतमपि द्रा-
गीषत्करमेव भागधेयस्य ॥ ३४ ॥

तद् गत्वा देवीमेव प्रसादयावः ।

[ इति निष्क्रान्तौ । ]

[3]तुरीयोऽङ्कः ।

---

१. 'णं उत्ति' क. ब. ङ.　　२. 'स्पन्दास्पद' ख.
३. 'चतुर्थोऽङ्कः' ख. घ.

## ॥ पञ्चमोऽङ्कः ॥

[ ततः प्रविशत्यमात्यो मेधावी । ]

मेधावी— [ चक्षुषी [1]उन्मृज्य मनःप्रसादं नाटयन् ]

अहो! मम महदुपकृतं महाराजामात्यभावेन । कुतः.

महाराजौदार्यादुपनतिजुषामत्र विदुषां
समाजैर्व्यासङ्गः करब[2]दरिकाशेषविषयैः ।
कृतैः शास्त्राभ्यासैर्नयनिगमबोधाय विविधै-
रविद्यामास्कन्दन्नयमपि विवेको विजयते ॥ १ ॥

कथं विभातप्राया विभावरी । तथाहि-



राजद्वारि मृदङ्गशङ्खपणवं रामाभिरावाद्यते
प्राकारोपरि वीथिका[3]कलरवः प्रायेण संशाम्यति ।
वीणानिक्वणितानुरूपमधुरं वीतोपमानस्वरं
गीयन्ते चरिताद्भुतानि नृपतेर्गेहेऽधुना मागधैः ॥ २ ॥

अपिच,

[4]हीयन्ते रिपवः श्रियेव हि मरुत्प्रष्ठा विभोस्तारकाः
क्षीयन्ते तमसां भराः क्षितिभुजः प्रत्यूहसङ्घा इव ।
वर्णानेष नियन्त्रयन् वसुगणैः स्वे स्वे पदे जृम्भते
देवस्येव पराक्रमो [5]दिनमणिर्देदीप्यमानः स्वयम् ॥ ३ ॥

---

१. 'उन्मील्य' घ. ङ.
२. 'बदरिता' ग. घ. ङ.
३. 'कलकलः' क. ग. ङ.
४. 'हीयन्ते' क. घ. ङ.
५. 'दिनकरो देदी' [illegible]. ग.

[ पुरोऽवलोक्य सस्मितम्। ]

चुम्बन्नेव मधुव्रतश्चिरपरीरम्भेण सम्भावितो
मुग्धां नीलसरोजिनीं मुहुरसावामोदमासेदुषीम्।
दृष्टः कोकनदेक्षणेन मिषता कोपारुणाभाभृता
पद्मिन्या नपदुर्द्वयोरनुसृतौ कामी परिभ्राम्यति ॥४॥

कथमिदं निर्वर्णयतो मम स्वामिचरितमेव स्मृतिमवतीर्णम्। (सहर्षम्)

कालाद् बहोरवधृतोऽपि कृतोद्यमोऽपि
लीलावतीपरिणयः किल भोसलेन्दोः।
सम्प्रत्युदञ्चति कथञ्चन संविधानैः
सर्वस्य तत् समय एव विपाकहेतुः ॥५॥



सम्प्रति पुनर्जीवितपरिरक्षणाय मामुपायं पृच्छता दाक्षायणेन निवेदितं शिवगङ्गारामवृत्तान्तमुपश्रुत्य[2] पल्लवितं मम कुतुकम्। दिष्ट्या च कमलकेतुः द्वित्रैरहोभिः संनिधास्यते। तदधुना नियतमवाप्स्यत इवारम्भस्य फलम्। (विमृश्य सनिःश्वासम्) हन्त! पुनरुदन्तोऽपि मैत्रायण्या न कश्चिदुदञ्चति। यन्मूलोऽयमखिलो महोत्सवः। (इति चिन्तां नाटयति।)

[ ततः प्रविशति मैत्रायणी। ]

मैत्रायणी (सनिर्वेदम्) विध्वंसितप्रयोजनया मया न शक्यो विलोकितुममात्यमेधावी[3]। (विचिन्त्य) अथवा कृतं निर्विद्य। [4]नि-

१ 'रुणेनेव हा' ख. २. 'गङ्गारामसुपश्रुत्य' ख
३. 'त्यो मे' घ. ४. 'विनि' ग.

वेदयामि यथातथ[1]ममात्यमेधाविने । स एव तदनु यथोचितं संविदधीत । इदममात्यभवनम् । ( प्रवेशं नाटयति[2] । )

मेधावी— ( दृष्ट्वा[3] ) कथं स्मृतमात्रेयमुपस्थिता मैत्रायणी ।

मैत्रायणी— (उपसृत्य) अपि कुशलम् अमात्यमेधाविने ।

मेधावी — ( सहर्षम् ) सम्प्रति भवदागमनेन । अपि तत्रभवत्यै स्वागतम् ।

मैत्रायणी — ( स्वगतम् ) किम[4]स्मै निवेदयामि । ( चिन्तयन्ती तिष्ठति । )

मेधावी — ( स्वगतम् ) नूनमियं लीलावतीवृत्तान्तमजान[5]ती चिन्तयन्ती तिष्ठति । कुतः कारणादियं तया विश्लिष्टा भवेत् । भवतु पृच्छामस्तावत् । ( प्रकाशं ) किं चिन्तयसि ।

मैत्रायणी दुरागताया मम कथं स्वागतमिति ।

मेधावी -- ( सातङ्कमिव ) कथमुद्विग्नेव कथयसि । तदादित आरभ्य शुश्रूषे भवदी[6]यं वृत्तान्तम् ।

---

१. 'थामात्य' ग.

२. 'ति । ) दिष्टया वर्धसे ।
मैत्रायणी— [ मेधाविनं दृष्ट्वा ]' घ. ङ.

३. '(दृष्ट्वा सहर्षं) सम्प्रति भवदागमनेन' क. ग. घ. ङ.

४. 'मस्मै विनि' क. ग. घ.

५. 'नती चिन्तयति । कुतः' क. घ. ङ.

६. 'दीयवृत्ता' ख.

मैत्रायणी-- जानाति किल भवान् सुमन्त्रसुमेधःप्रभृतीन्[1] वाराणसीतः प्रस्थितान् ।

मेधावी-- अथकिम् । ततः परं[2] मे ज्ञातव्यम् ।

मैत्रायणी— ततश्च यवनोपरुद्धां वाराणसीमुपश्रुत्य पुरोधःसनाथानस्मान् प्रस्थाप्य मासमात्रपश्चादपि न्यवर्तत सुमन्त्रः ।

मेधावी— उचित एव किल तादृशेऽवसरे स्वामिना सहभावो मन्त्रिणाम् । ततस्ततः ।

मैत्रायणी — ततश्च महामघोत्सवायैव व्रजन्त्यां मध्येपथंमिलितायां मन्दाकिनीनाम्न्यां तपस्विन्यां सञ्जातविस्रम्भां लीलावतीमुपलक्ष्य[3] तां सपुरोधसं प्रस्थाप्य पुण्यक्षेत्रं पुरुषोत्तमं दिदृक्षुरहमगमम् ।



मेधावी— महामघोत्सव एव स्वयमस्माभिरेतं सङ्कटं[?] ब्रजति भवत्या हृदयम् ।

मैत्रायणी— अथकिम् ।

मेधावी— किमतः परमपि ज्ञायेत ।

मैत्रायणी— ज्ञायत इव किञ्चिदिदानीम् ।

मेधावी— किं तत् ।

---

१. 'प्रमुखान्' ग. घ. ङ. २. 'परिज्ञा' ग, परं ज्ञा' ख. ग.
३. 'क्ष्य तयैव समं तां' ग. घ. ङ.

मैत्रायणी— सम्प्रति पुरुषोत्तमादागच्छन्त्या मया मध्येसरणि दृष्टो महाराजं दिदृक्षुः कमलकेतुर्यथावृत्तमभिहितः सगद्गदं मामिदमवादीत् । 'मैत्रायणि! त्वमपि प्रमादिन्यभूः । सम्प्रति कुत्रेति न ज्ञायते वत्सा लीलावती । महाराजेन च निखिलमपि चोलदेशं विचित्य[1] तत्र सा नागतेति पत्रिका प्रहिता । तत् किं करोमि मन्दभाग्यः' इति ।

मेधावी— अस्त्येतदासीत् पत्रिका प्रहिता[2] । ततस्ततः ।

मैत्रायणी— ततश्च स कथञ्चिदाश्वसितः[3] कमलावत्या समं काञ्चीपुरमागत्य निर्विण्णचेता भवते पत्रिकां प्राहिणोत् ।

मेधावी— (स्वगतम्) ह्यः किल मायूरतः प्रत्यागतया भगवत्या संवदमानस्तत्र देव्यागमनमुपश्रुत्य त्वरितं निर्गच्छन् कस्मैचन प्रयोजनाय विस्मृतवानिव पत्रिकां तत्रैव निहितवानस्मि । (प्रकाशम्) तेन मन्ये कमलकेतुर्बलवन्निर्विद्यत इति ।

मैत्रायणी— किमुच्यते निर्विद्यत इति । बलवती किल दारुणा दशा तस्येदानीम् । यतः,

नाहाराय रुचिं दधाति न च निद्राति प्रियासङ्गतः
पृष्टो न प्रतिवक्ति च प्रतिकलं किञ्चालपत्यन्यथा ।
अन्तर्हन्त! विचिन्तयन् किमपि च क्रन्दत्ययं सम्भ्रमाद्
वत्से! वत्सलमानसे सति मयि कासीति लीलावति! ॥६॥

---

१. 'त्यात्र सा' ग. घ. ङ. २. 'प्रहितैव' ख.
३. 'श्वा' ङ.

मेधावी— स्थाने खेदः। यत् तपस्यालब्धमेकमेव किल तस्यापत्यम्। ततस्ततः,

मैत्रायणी— [1]ततः स कामाक्षीं वन्दमानः सुमेधसा पुरोधसा यथोचितमुपचारितेन इदमभिहितः- कमलकेतो! तदानीं काञ्चीनामनीह सिद्धिक्षेत्रे,

श्रुत्वातङ्कं याचनं काशिकेभ्यो
दैवं तेऽहं विप्रतीपं निहन्तुम्।
चर्यामग्र्यामास्थितः प्रेषयं ते
मन्दाकिन्या कन्यकामुत्सवाय ॥७॥

इतराविदितमेव मत्समीपमागच्छतमिति प्रहिते न पुनरागते इति।

मेधावी— (स्वगतम्) इतः परं मन्दाकिन्या लीलावत्याः कथं विश्लेषः मन्दाकिनी च कुत्रेति ज्ञातव्यं परमवशिष्यते (प्रकाशं) ततस्ततः।

मैत्रायणी— ततश्च कमलकेतुमुखादवगमितवृत्तान्तः पुरोधा लीलावतीप्रकाशनाय पुनस्तत्रैव तपस्यितुमुपाक्रमत। अहं पुनरुदन्तमिमं भवन्तं श्रावयितुं प्रथममागतवती। कमलकेतुस्तु भवता श्व एव दर्शिता।

मेधावी— (सबहुमानं) मैत्रायणि! मत्कृते महदायासितासि।

मैत्रायणी— (सनिःश्वासं) किमनेन विफलेनायासेन।

---

१. 'तश्च स' ग.

मेधावी— मा मैवम्। द्रक्ष्यामस्तावदितोऽपि संविधानात्।

मैत्रायणी— (सप्रत्याशं) दर्शयतु भवानत्र मेधाविताम्।

मेधावी— (सस्मितं) भवतु। विश्राम्यतु भवती। अहमपि देवाय प्रवृत्तिमिमामवगमयामि।

[ इति निष्क्रान्तौ।]

शुद्धविष्कम्भः।

---

[ ततः प्रविशति राजा। ]

राजा— (सनिर्वेदं) अहो! गम्भीरोदारचरिताया देव्या अपि दीर्घरोषता, यन्मासेनापि मानग्रहो नोपशाम्यति। सम्प्रति हि,

चाटूक्तिं न यथापुरं रचयतामातो विचारो न मे
नालोकैर्विशदीकरोतु हृदयं नातोऽपि खेदो मम।
एकान्तेऽपि न सङ्गता रमयतां नातोऽप्यवज्ञा मम
न्यक्कारस्तु स एव यत् कलयते सत्कारमन्यादृशम्॥८॥

अथवा नातिभूमिं गमयितव्यः क्वचिदप्यनुरागः। कुतः,

प्रणयः परिणममानः
प्रायो लब्ध्वा कियन्तमपि मन्तुम्।

---

१. 'पि देवाय प्रवृत्तिमिमामवगमयामि।' क. ग. ङ.

२. 'गभीरो' ग. ङ.

निबिडोत्पीड इवौघो[1]
निश्शेषः स्रवति कियति विवरेऽपि ॥९॥

(सनिःश्वासं) सा पुनस्तपस्विनी सारसिका न ज्ञायत एव क्वेदानीमिति। (विमृश्य) प्रायेण न मे भूयो जीवन्ती नयनपथमवतरिष्यतीति[2] प्रत्याशा। यतस्तदानीं,

श्रुत्वा देव्या[3] वाचमाकस्मिकीं तां
निष्क्रामन्ती कान्दिशीका निकुञ्जात्।
ज्यानिर्घोषैस्त्रासिताया हरिण्याः
सारङ्गाक्षी सा दशामन्वयासीत् ॥१०॥

(दीर्घमुष्णं च निःश्वस्य) नैतावतापि दूयते मम हृदयम्। किन्तु,

अपि क्रुद्धां देवीमपि च परिमुग्धं जनमिमं
निरीक्ष्य प्रत्यक्षं निजमपि लयं निश्चितवती।
गलद्बाष्पोत्पीडं गरिमनिबिडश्वासमकरोत्
कलावत्यां दृष्टिं यदियमिदमाः! कूजति[4] मनः ॥११॥

हन्तेदानीं जीवति सा न वेति वृत्तान्तहरोऽपि न कश्चिदपि मे। यतो दाक्षायणोऽपि देवीभयेन कण्टकवेधापदेशाद् राजभवनागमनमेव त्याजितः। (विमृश्य साध्यवसायं) सर्वथा देवीप्रसादमन्तरेण न मे शान्तिरान्तररुजायाः।

[ नेपथ्ये ]

---

१. 'इवोच्चैः' क.
२ 'नसरणिमव' ग. ङ.
३. 'देवीवाच' क.
४. 'क्रन्तति' ग. ङ.

अविणाम ळीळावदी वि आअच्छइ[1] । (अपिनाम लीलावत्यपि आगच्छति । )

राजा— (श्रुत्वा) अये! पार्श्व[2] एव चित्रशालायां व्याहरति देवी । तद् यावदिहैव स्थितो वातायनविवरेण शृणोमि सल्लापम् । [तथा अवस्थितः ।]

[ततः प्रविशति देवी लेखहस्ता चन्द्रकला विभवतश्च परिवारः ।]

चन्द्रकला— दइदवच्छो[3] खु अय्यकमळकेदू । ता कहं ताए विणा आअमिस्सदि । (दयितवत्सः खलु आर्यकमलकेतुः । तत् कथं तया विना आगमिष्यति ।)

राजा— कनीयसीदर्शनकुतूहलमेनामुत्कण्ठयति । तत् कथमस्यै तस्यास्तादृशीं दशां निवेदयिष्यामः ।

देवी— ता पिअं मे । (तत् प्रियं मे ।)

चन्द्रकला— (सश्लाघं) जणणीबहिणीए वि तणआअं कीरिसो दे कणीयसित्तणेण सिणेहोक्करिसो । (जननीभगिन्या अपि तनयायां कीदृशस्ते कनीयसीत्वेन स्नेहोत्कर्षः । )

देवी— ण केवळं कणीअसित्तणं सिणेहे काळणं । (न केवलं कनीयसीत्वं स्नेहे कारणम् । )

---

१. 'आअमिस्सदि' क.          २. 'पार्श्वत एव' ख. ग.

३. 'ताइं दाववच्छलो खु' ग. ङ.

चन्द्रकला— किं अवरं[1] । (किमपरम् ।)

देवी— अब्भुदा गुणा अ । (अद्भुता गुणाश्च ।)

चन्द्रकला— कहं विअ ताए गुणा तुह कण्णपहं ओदिण्णा । (कथमिव तस्या गुणास्तव कर्णपथमवतीर्णाः ।)

राजा— ममापि श्रोतव्यमिदम्[2] ।

देवी— ताए खु जादमत्ताए जादअं कमळकेदुणा[3] अज्जउत्त-समीवं पेसिदं । तं अ मए देव्वण्णमुहादो सुट्ठु परिक्खिदं । (तस्याः खलु जातमात्राया जातकं कमलकेतुना आर्यपुत्रसमीपं प्रेषितम् । तच्च मया दैवज्ञमुखात् सुष्ठु परीक्षितम् ।)

राजा— अस्त्येतत् । फलभागं तु विस्मृतवानस्मि ।

चन्द्रकला— ता कहेहि यदि सुमरेसि । (तत् कथय यदि स्मरसि ।)

देवी— जो खु एदाए पाणिं गह्णिस्सदि सो सव्वहोमो भविस्सदि । (यः खलु एतस्याः पाणिं ग्रहीष्यति स सार्वभौमो भविष्यति ।)

राजा— (सविमर्शं) हन्त! ममाप्यभ्यसूर्यांपदानीमान्यक्षराणि[4] ।

चन्द्रकला— (सस्मितं) अह्मो! केत्तिआ अच्चुत्ती । जं राअण्ण-

---

१ इतः परं १२५तमपुटे 'वस्तुतस्तु' इत्यन्तं गपाठे लुप्तम् ।

२. 'श्राव्यमि' ख. ३. 'अज्जकमळ' घ. ङ. ४. 'यापादीनीमा' घ. ङ.

मुद्धण्णादो भट्टिणो अण्णस्सिं ण सव्वहोमदा पदं करिस्सदि । होदु दोसो कोवि किं ण भणिदो । (अम्मो ! कियती अत्युक्तिः । यद् राजन्य-मूर्धन्याद् भर्तुरन्यास्मिन् न सार्वभौमता पदं करिष्यति । भवतु, दोषः कोऽपि किं न भणितः ।)

देवी— बाढं भणिदो । (बाढं भणितः ।)

चन्द्रकला—- तं वि कहेहि । (तमपि कथय ।)

देवी — एसा वि [1]कंचि काळं [2]कंचि किळेसं अणुभविअ कस्स वि रण्णो कणीअसी जाआ भविस्सदि । ता जेट्ठपरंपरीए जाअसीपुत्तं जुवरज्जं अहिवसंतं एदाए पुत्तो अणुवट्टिस्सदि । (एषापि कञ्चित् कालं कमपि क्लेशमनुभूय कस्यापि राज्ञः कनीयसी जाया भविष्यति । ततो ज्येष्ठपरम्पया ज्यायसीपुत्रं यौवराज्यमधिवसन्तमेतस्याः पुत्रोऽनुवर्तिष्यते ।)

राजा— (सप्रत्याशम्) स्पृहणीया खलु दोषेणापि लीलावती । तथाहि,

परिणयति य एतामस्य पुत्रौ भवेतां
प्रथमपरिगृहीता चास्य पुत्रिण्यवश्यम् ।

ततश्च,

कुवलयदृशमेनां को नु वा नाभिलष्येत्
कुलमविरतमुर्व्यां कुर्वतीं निर्विवादम् ॥ १२ ॥

चन्द्रकला — एसो वि णाविदिअदोसो । (सपरिहासं) ता तुह

---

१. 'कंचि वि का' क. घ., 'कंवि का' ङ.
२. . 'कंचि कि' क.

एव्व कणीअसित्तणे जोग्गा एसा । (एषोऽपि नाविदितदोषः । तत् तवैव कनीयसीत्वे योग्यैषा । )

देवी— (सस्मितं) जदि एव्वं का णाम णाणुमण्णिस्सदि । तस्स खु महाराअस्स दाणिं अण्णहण्णह मणं पसरदि । (यद्येवं का नाम नानुमंस्यते । तस्य खलु महाराजस्येदानीं अन्यथान्यत्र मनः प्रसरति) ।

राजा— (साभ्युपगमं) सत्यम् । मम सत्यपि परत्र महति गुणे सारसिकातो न मनः परावर्तते ।

देवी—(सदृष्टिक्षेपं) को एसो ळेहो । (क एष लेखः ।)

चन्द्रकला— हिओ किळ अय्यमेहाविणा विसुमरिअ णिक्खित्तो भअवदीए समीवे मए उवळद्धो । (ह्यः किल आर्यमेधाविना विस्मृत्य निक्षिप्तो भगवत्याः समीपे मयोपलब्धः । )

देवी— ता किं वाइअं ति सअं एव्व जाणाहि । (तत् किं वाचिकमिति स्वयमेव जानीहि ।)

[चन्द्रकला लेखमुन्मुच्य वाचनं नाटयति । ]

राजा — किन्नाम मेधाविनापि विस्मृतो लेखः ।

[चन्द्रकला वाचयित्वा विस्मयं विषादं च नाटयति । ]

देवी— किं तुह्मिं चिट्ठसि । भणाहि कस्स एसो ळेहो ।

(किं तूष्णीं तिष्ठसि । भण कस्यैष लेखः । )

चन्द्रकला— अय्यकमळकेदुणो । (आर्यकमलकेतोः । )

देवी— किं उद्दिसिअ । (किमुद्दिश्य । )

चन्द्रकला— अय्यमेहाविणं । (आर्यमेधाविनम् । )

देवी— को णिद्देसो । (को निर्देशः । )

चन्द्रकला— (स्वगतं) कहं एदं अप्पिअं कहणिज्जं । आदु कहं वा पिअसहीए णिगूहणिज्जं । होदु एव्वं दाव । (प्रकाशं) होदि! जं किंपि अत्थ[1] वट्टइ । (कथमिदमप्रियं कथनीयम् । अथवा कथं वा प्रियसख्या निगूहनीयम् । भवत्वेवं तावत् । भवति! यत्किमप्यत्र वर्तते । )



देवी— अवि गहणं किं वि राअकज्जं । (अपि गहनं किमपि राजकार्यम् । )

राजा— किन्नु भवेत् ।

चन्द्रकला— (स्वगतं) किं इदो परं उत्तरं । (विमृश्य) अहवा किं गोवणेण । (प्रकाशं) णहि णहि । किंदु पकिदं एव्व किंपि । (किमितः परमुत्तरम् । अथवा किं गोपनेन । नहि नहि । किन्तु प्रकृतमेव किमपि । )

देवी— ता कहेहि[2] । (तत् कथय । )

---

१. 'एत्थ वट्टदि' घ.  २. 'हि कहेहि' घ.

चन्द्रकला— इदं संदिट्ठं। (इदं सन्दिष्टम् ।)

[ सस्कृतमाश्रित्य ]

पुरा किल,

निरुपमगुणभूम्ना चोळभूपेन वत्सां
कथमपि घटयेथास्त्वं प्रतिज्ञानुरोधात् ।
इति मितपरिवारां व्याजतः प्रेष्य चोळान्
ननु सुचिरमभूवं निर्वृतो गर्वितश्च ॥ १३ ॥

सम्प्रति तु,

आश्रुते भवतार्थेऽस्मिन्ना श्रुतेः सदृशा गिरा ।
मन्ये मदीयगन्धेन भागधेयविपर्ययः ॥ १४ ॥

अतो लीलावतीमाता तद्विरहमसहमाना वत्साया देव्या दर्शनेन खेदं विनोदयिष्यति । तदविळम्बमागच्छाम इति ।

देवी— (साद्भुतविषादं) कहमेदं अण्णारिसं वट्टइ । (कथमेतदन्यादृशं वर्तते ।)

चन्द्रकला— अहइं । (अथकिम् ।)

राजा— कथमद्भुतः पुनरुपक्रमो दृश्यते ।

देवी— ([1]साशङ्कं) अवि णाम अय्यकमळकेदुणा मह अणिवेदिअ [2]एव्वं [3]दिच्छिदा वच्छा । तं अ अय्यउत्तस्स एव्व । अविणाम पडि·

---

१. 'सविशङ्कं' क. घ. २. 'एव्व णिदि' क.
३. 'णिच्चिदं । तं अय्य' घ. ङ.

ण्णादं अय्यमेहाविणा वि। अह्मो! अय्यउत्तस्स संविहाणअं ण हु तं अविण्णाविअ उस्सासं[1] वि अय्यमेहावी करेदि। (अपिनाम आर्यकमलकेतुना मेऽनिवेद्यैवं दित्सिता वत्सा। तच्च आर्यपुत्रस्यैव। अपिनाम प्रतिज्ञातमार्यमेधाविनापि। अम्मो! आर्यपुत्रस्य संविधानकम्। न खलु तमविज्ञाप्योच्छ्वासमपि आर्यमेधावी करोति।)

चन्द्रकला— अहइं। (अथकिम्।)

राजा— हन्त! सारसिकावृत्तान्तविप्रलब्धा मय्येव दोषमिमं[2]माशङ्कते। मेधाविना वा कथमिदं मम न निवेदितम्। वस्तुतस्तु,

अस्त्येतद् विदितं यदद्भुतगुणा लीलावती सा पुनः
पित्रापि प्रहिता महामघमहं द्रष्टुं [दीर्घं निःश्वस्य सानुशयं] तथाभूदिति।
सा मह्यं वितितीर्षिता स च पुनर्मेधाविनः संश्रव-
स्तच्चोद्देश्यमिह प्रयाण इति नश्चित्रीयते मानसम्॥ १५॥

भवतु जानीमः क्रमेणैव।

देवी— कहं एदं विवरिस्सं। ण हु अय्यउत्तो पुच्छिदो सच्चं कहइस्सदि। (कथमेतद् विवरिष्यामि। न खल्वार्यपुत्रः पृष्टः सत्यं कथयिष्यति।)

राजा— (निःश्वस्य)
प्रत्यक्षमेकमागः प्रत्यनुनयतो दिवानिशं देवीम्।
कथमपरं परिभवता कथय विधे! पातितं भवता॥ १६॥

---

१. 'ऊसासं' घ. ङ. २. 'यमा' क., 'मिमं शङ्कते' घ. ङ.

देवी— (विचिन्त्य) होदु दक्खाअणेण पआसइस्सं। (परिजनं विलोक्य) मुहरिए! 'जइ दे जीविदासा ता दाणिं सच्चं कहिअ सुही होहि' त्ति भणिअ उवणेहि दक्खाअणं। (भवतु। दाक्षायणेन प्रकाशयिष्यामि। मुखरिके! 'यदि ते जीविताशा तर्हि इदानीं सत्यं कथयित्वा सुखी भवे'ति भणित्वा उपनय दाक्षायणम्।)

मुखरिका— तह। (तथा) [इति निष्क्रान्ता।]

राजा— कथमिदमविदितं कथयतां तपस्वी।

[ततः प्रविशति मुखरिकया सह विदूषकः।]

विदूषकः— जइ[1] एव्वं आदिदो आरहिअ सव्वं कहेमि। (यद्येवमादित आरभ्य सर्वं कथयामि) [पङ्गुवत परिक्रामन् सचकितमुपसृत्य] जेदु[2] देवी। (जयतु देवी।)

चन्द्रकला— मा भाआहि। सच्चं भण। (मा बिभेहि। सत्यं भण।)

विदूषकः— जइ अभअं ता एस कहेमि। पुढमं खु पूआरंभदिअहे अंतेउरादो णिक्कमंदी सारसिआ मणिसिहरट्ठिदेण रण्णा दिट्ठा। (यद्यभयं तर्हि एष कथयामि। प्रथमं खलु पूजारम्भदिवसे अन्तःपुरान्निष्क्रामन्ती सारसिका मणिशिखरस्थितेन राज्ञा दृष्टा।)

देवी— (स्वगतम्) होदु एदं विणा देव्वं एव्व। (प्रकाशं) तदो तदो। (भवत्वेतद् विना दैवमेव। ततस्ततः।)

---

१. 'अंजं ए' क.

२. 'देवि वड्ढस्व' क. ग. घ. ङ.

विदूषकः— तहिं एव्व दिअहे सिंगारसरमणिभित्तिम्मि तस्स पडिच्छंदओ ताए वि दिट्ठो । तदो[1] महाणवमिम्मि तुह उज्जाणे अण्णोण्णदंसणं । (तस्मिन्नेव दिवसे शृङ्गारसरोमणिभित्तौ तस्य प्रतिच्छन्दकस्तयापि दृष्टः । ततो महानवम्यां तवोद्याने अन्योन्यदर्शनम् ।)

[देवीचन्द्रकले परस्परं साकूत[2]मवलोकयतः ।]

विदूषकः— तदो मुसिदहत्थो एव्व चोरओ तुए गहिदो । (ततो मुषितहस्त एव चोरकस्त्वया गृहीतः ।)

राजा—जाल्म ! किमप्रस्तुत[3]मप्रकाशनीयं च[4] सम्प्रति जल्पितवानसि । अथवा न तवायमुपरि दोषः । कुतः,

अतर्कितानि यानि प्रागनुकूलेऽघटन्त[5] नः ।
प्रतीपानि कृतान्येव प्रतिकूलेऽद्य दैवते ॥ १६ ॥

चन्द्रकला— (लेखं विदूषकहस्ते दत्त्वा) एदं वि वाचिअ सच्चं कहेहि । (एतदपि वाचयित्वा सत्यं कथय ।)

विदूषकः— (वाचनं रूपयित्वा ससम्भ्रमम्) एत्थ किं वि ण आणामि[6] । सवामि बह्मसुत्तएण । (अत्र किमपि न जानामि । शपामि ब्रह्मसूत्रकेण ।)

देवी— कहं अय्यउत्तस्स णम्मवुत्तंतो वि तुए ण विण्णाअदि ।

---

१. 'ता महा' घ. ङ.
२. 'तमा' ग. ङ.
३. 'प्रकृत' क. घ. ङ.
४. 'च जल्पि' क. ग. ङ.
५. 'घटन्ति' क. ग. घ. ङ.
६. 'मि बह्म' क. 'मि स्वबह्म' ग. घ. ङ.

होदु। चदुरिए! अय्यमेहाविणं एव्व उबणेहि। (कथमार्यपुत्रस्य नर्मवृत्तान्तोऽपि त्वया न विज्ञायते। भवतु। चतुरिके! आर्यमेधाविनमेवोपनय।)

चतुरिका— तह। (तथा) [इति निष्क्रान्ता।]

राजा— दिष्ट्या ममापि संशयश्छेत्स्यते।

[ततः प्रविशति चतुरिकयोपदिश्यमानमार्गो मेधावी।]

मेधावी— (स्वगतम्) प्रायेण देवीहस्ते लेखेन भवितव्यम्।

चतुरिका— इदो इदो अय्यो। (इत इत आर्यः।)

मेधावी— (उपसर्पन् पुरोऽवलोक्य सहर्षं स्वगतम्) दाक्षायणहस्ते स एव लेखः। दिष्ट्या पुनरनेनापदेशेन सङ्कटान्मोचितस्तपस्वी दाक्षायणोऽपि।



चतुरिका— एसा देवी। (एषा देवी।)

मेधावी—

ईश्वरस्येतरासङ्गं शुचेरननुजानती।
मूर्तेवोपनिषद्देवी पावनी लक्ष्यते पुनः ॥१७॥

([1]सविनयमुपसृत्य) विजयतां देवी।

देवी— (सबहुमानं हस्तेन निर्दिशन्ती) आसणपरिग्गहो करीअदु अज्जेण। (आसनपरिग्रहः क्रियतामार्येण।)

---

१. 'शुद्धेरभ्यनु' ख. ङ. 'शुचेरभ्यनु' क. ग.

मेधावी —(उपविश्य) देवि! किमानयनानुग्रहप्रयोजनम् ।

देवी— ण किं वि अण्णं । दक्खाअण! लेहं अय्यहत्थे अप्पेहि ।

(न किमप्यन्यत् । दाक्षायण! लेखमार्यहस्ते अर्पय ।)

[विदूषकः अर्पयति ।]

मेधावी— (गृहीत्वा सप्रत्यभिज्ञमिव) किं भगवत्याः सविधादधिगतो लेखः । ह्यः किल परिश्रमाद् विस्मृतवानस्मि ।

देवी— सव्वं आणुपुव्वीए सोदुं इच्छेमि । (सर्वमानुपूर्व्या श्रोतुमिच्छामि ।)



मेधावी— शृणोतु तत्रभवती । पुरा किलाहं देवे युवराजे सति एकमहाराजेन प्रहितस्तीर्थानि पर्यटन् वाराणस्यां कमलकेतुना विस्रम्भात् किञ्चिदभ्यर्थितोऽस्मि ।

राजा— हन्त! चिरनिर्वृत्तां कथामुपक्षिपति ।

देवी— किं विअ । (किमिव ।)

मेधावी—

दुर्घटं भवदन्येन कञ्चिदर्थं निवेदये ।
कथञ्चिद् घटनीयस्ते श्रेयसे यशसे च नः ॥१८॥

---

१. 'किमागमननियोगानुग्रह' क. ग. घ ङ.

इति। तदनु राज्यकार्यप्रमादविचायव* कार्यगौरवं तथेति प्रतिश्रुतं मया।

देवी— तुह मदीए दुस्साहं किं कज्जगोरवं। तदो तदो। (तव मत्या दुस्साधं किं कार्यगौरवम्। ततस्ततः।

मेधावी— ततश्च तेन किञ्चिदन्यदेवोपक्रान्तम्†।

प्रसादितां विशालाक्ष्या कन्यामन्यादृशीं गुणैः।
युवराजाय दित्सामि तत् त्वया संविधीयताम् ॥१९॥

इति।

राजा— (सविमर्शम्) प्रायस्तातचरणैः सौहार्दमपत्यसम्बन्धेन परिपालयेयमिति कमलकेतोराशयः।



देवी— णं असच्चभीरुदाए अकामेण वि अय्येण एदं अब्भुपगन्तव्वं एव्व। तदो तदो। (ननु असत्यभीरुतया अकामेनापि आर्येणेदमभ्युपगन्तव्यमेव। ततस्ततः।)

मेधावी— ततश्च प्रतिनिवृत्ता वयं तत्रभवत्याः स्वाधीनवल्लभत्वादुदासिष्महि।

देवी— अय्यउत्तेण एत्थ किं पडिवण्णं। (आर्यपुत्रेणात्र किं

---

१. 'नु च राज का' क. ग. घ.

---

* इत आरभ्य 'कन्यांमन्ये'ति (श्लो० १९) पर्यन्तं कपाठे भ्रष्टम्।
† इत आरभ्य 'अयि अविश्वसनशीले '(p. 131 l. 8)इत्यन्तं गपाठे भ्रष्टम्।

प्रतिपन्नम् ।)

मेधावी— न विज्ञापित एवायमर्थो देवाय ।

देवी— ( स्वगतं ) ता वि हा मए अय्यउत्ते संकिदं । (तदपि हा मया आर्यपुत्रे शङ्कितम् ।

राजा— अवसरोऽयमात्मानं दर्शयितुम् । ( इति परावृत्योपसर्पति । )

[ सर्वे राजानं दृष्ट्वा ससम्भ्रममुत्तिष्ठन्ति । ]

राजा— अयि अविश्वसनशीले! सम्प्रति[1] हि वा विश्वसिहि माम् ।

देवी— ( स्वगतं ) कहं सुदं सव्वं वि अय्यउत्तेण । ( प्रकाशं ) दिट्ठिआ वड्ढसि समळाहेण । ( कथं श्रुतं सर्वमप्यार्यपुत्रेण । दिष्ट्या वर्धसे समलाभेन । )

मेधावी— विजयतां देवः ।

विदूषकः— जेदु वअस्सो । ( जयतु वयस्यः । )

परिजनः— जेदु भट्टा । ( जयतु भर्ता । )

राजा— देवि! कृतमु[2]पचारायासेन। परिगृह्यतामासनम् ।

---

१. 'ति वा क. ग. घ . ङ.'   २. 'माचारा' क. ग. घ. ङ.

[देव्या सहोपविशति ।]

देवी— अय्य! तुए वि आसणपडिग्गहो करीअदु । (आर्य ! त्वयाप्यासनपरिग्रहः क्रियताम् ।)

[मेधावी उपविशति ।]

विदूषकः— पंगुणो उण उववेसो ण णिउज्जीअदि । (पङ्गोः पुनरुपवेशो न नियुज्यते) ।

देवी— (सहासं) अय्य! उवविस उवविस[1] । (आर्य! उपविशोपविश ।

राजा— (स्वगतम्) दिष्ट्या कथञ्चिदनेन प्रस्तावेन राजभवनमानीतस्तपस्वी । अहमपि देव्याः किञ्चिद्विस्रम्भणीयोऽस्मि ।

मेधावी— (स्वगतम्) जानीम इदानीं किं वदिष्यति देवीति ।

देवी— अय्य! तं पडिण्णं मह अणिवेदिअंतेण तत्तहोदा सव्वहा असाहु किदं । (आर्य! तां प्रतिज्ञां ममानिवेदयता तत्रभवता सर्वथा असाधु कृतम् ।)

मेधावी— निवेदने किं प्रयोजनम् ।

देवी— तहिं एव्व ओसरे ळीळावदीए पाणिं गाहइस्सं । (तस्मिन्नेवावसरे लीलावत्याः पाणिम् अग्राहयिष्यम् ।)

---

१. 'सं उव' क. ग. घ. ङ.

मेधावी— (स्वगतम्) एतदेव खलु तव मुखान्निर्णेतुमयमुपक्रमः। [स्मयते।]

देवी— णहु एसो परिहासो, अहिलासो एव्व महं वि तारिसो ठिदो। (न खल्वेष परिहासः, अभिलाष एव ममापि तादृशः स्थितः।)

मेधावी— (स्वगतम्) पत्युः प्रणयसङ्क्रमं परत्र पश्यन्ती लीलावतीजातकमपि जानती सम्प्रति सम्मन्यते। [सोत्प्राशं राजानं [1]प्रेक्षते।]

राजा— परवन्तः खलु वयममी देव्या।

देवी— (राजानं प्रति[2]) फुडं खु एदं सारसिआअं। (स्फुटं खल्वेतत् सारसिकायाम्।)



[राजा वैलक्ष्यं नाटयति।]

देवी— (सविमर्शं) अभित्तिचित्ताइदो खु दाणिं एसो अहिलासो। जं लेहवुत्तंतसेसादो लीलावदीए कावि दसा पडिहाइ। (सगद्गदं) अह्मो किण्णु सुणिदव्वं भवे। (अभित्तिचित्रायितः खलु इदानीमेषोऽभिलाषः। यल्लेखवृत्तान्तशेषाल्लीलावत्याः कापि दशा प्रतिभाति। अहो किं नु श्रोतव्यं भवेत्।)

[नेपथ्ये]

---

१. 'ईक्षते' ङ. २. ति) 'जं फुडं' ग. घ.

अविलम्बितमेव शुभमुदन्तं देवीसनाथाय महाराजाय श्रावयिष्यामि ।

मेधावी— मा स्म दूयतां भवती । मङ्गलं किलेदमानुषङ्गिकमुपश्रूयते ।

[प्रविश्य]

कञ्चुकी— विजयतां देवः ।

राजा— कथं प्रहृष्ट इव लक्ष्यते[1]।

कञ्चुकी— देव! साम्प्रतमार्यकमलकेतुरागतः पञ्चनदमितिदूतः समागतः ।

(सर्वे हर्षं नाटयन्ति।)

देवी— अम्मो विहे! अमिएण समं हाळाहळं वि सिय्यंतस्स तुह ण एदं अब्भुदं । (अम्मो विधे! अमृतेन समं हालाहलमपि सृजतः तव नैतदद्भुतम् ।)

राजा— मेधाविन्! दाक्षायणेन सह सत्वरं प्रत्युद्गम्य भवता यथोचित[2]मुपचर्यया सम्भाव्य समानयितामार्यकमलकेतुः । [3]श्वस्तमहं द्रष्टास्मि ।

मेधावी— तथा [इति कञ्चुकिविदूषकाभ्यां निष्क्रान्तः।]

---

१. 'से' ग. घ. ङ. २. 'मुपकर्यया'

३. 'श्वशुरमहं' ख.

देवी— अह्महे! लेहसेसो ण सुदो एव्व। (अम्महे! लेखशेषो न श्रुत एव।)

राजा— (स्वगतं) दिष्ट्या देवी लेखमुखेनैव वृत्तान्तमिममवगमिता। (प्रकाशं) सकलमपि ते विस्तरेण कथयामि। परिश्रान्ता सम्प्रति लक्ष्यसे। तदन्तःपुरमेव गच्छामः। (इत्युत्तिष्ठति)।

देवी— (सबाष्पं) हा वच्छे महीअळमङ्गळदेवदे! हा कमळकेदुकुळदीविए! हा कमलावदीणअणचओरचंदिए! हा वहिणि लीळावदि! कहिं सि, । (हा वत्से महीतलमङ्गलदेवते! हा कमलकेतु-कुलदीपिके!, हा कमलावतीनयनचकोरचन्द्रिके! हा भगिनि, लीलावति! कुत्रासि।)

राजा— अयि सरले [1]किमिदमपदे खिद्यसे।

चतुरिका— इदो इदो महाराओ। इदो इदो भट्टिणी। [परिक्रामन्ति] (इत इतो महाराजः, इत इतो भट्टिनी)

राजा— (स्वगतं)

लीलावती बत पुरा मिळिता यदि स्याद्
बालाधुना कमलकेतुसमागमेऽस्मिन्।
देवीकरान्नियतमेव भवेदवाप्ता
दैवी [2]गतिर्भगवती तदलङ्घनीया॥ २०॥

---

१. 'किमपदे' घ. ङ.        २. 'मति' क.

भवतु तद् यथा तथा वा । सम्प्रति हि,

प्रकृतिं प्रत्यापन्ना
देवी सुचिरादहं च धीरोऽस्मि ।

[ सनिःश्वासं ]

सारसिकैव तु विधिना
लीलावत्या दशामहो गमिता ॥ २१ ॥

[ परिक्रम्य निष्क्रान्ताः सर्वे । ]

पञ्चमोऽङ्कः



## ॥ षष्ठोऽङ्कः ॥

[ततः प्रविशति कलावती ।]

कलावती— अह्मो देव्वस्स परिणामदारुणदा । जं दाणिं तवस्सिणी सारसिआ दक्खाअणावअमिदवुत्तंताए देवीए मह हत्थादो पब्भंसिअ चंदअलाए वसे दारुमअम्मि पंजरे णिरुंधिअ ठाविदा । ता इदो वरं कदिपआ एव्व खणा ताए जीवंतीए विण्णत्ती उण ताए कहं महाराअं पावइदव्वा । संपदं खु एदस्सिं राअउळे कमळकेदुणो आअमणेण महंतो ऊसाहो । ता परुण्णमुहीए वि ण भविदुं सक्कं । ता कहिं वि कोणे चिट्ठिअ दक्खाअणं पडिक्खिस्सं[1] । [परिक्रामति ।]

(अहो दैवस्य परिणामदारुणता, यदिदानीं तपस्विनी सारसिका दाक्षायणावगमितवृत्तान्तया देव्या मम हस्तात् प्रभ्रंश्य चन्द्रकलाया वशे दारुमये पञ्जरे निरुद्ध्य स्थापिता । तस्मादितः परं कतिपये एव क्षणास्तस्या जीवन्त्याः विज्ञप्तिः पुनस्तस्याः कथं महाराजं प्रापयितव्या । साम्प्रतं खलु एतस्मिन् राजकुले कमलकेतोरागमनेन महानुत्साहः । तस्मात् प्ररुदितमुख्या अपि न भवितुं शक्यम् । तत् कुत्रापि कोणे स्थित्वा दाक्षायणं प्रतीक्षिष्ये ।)

[प्रविश्य विदूषकः]

विदूषकः — [सविस्मयं] अह्महे किं उद्दिसिअ किं उवक्कमिदि त्ति ण आणीअदि अय्यमेहाविणो तंतं । जं अहं एव्वं संविहिदो ह्मि । जह अज्ज देवीए कस्सिं वि कज्जे णिउज्जंदो ताए अणुमदिह्नअं ळेहं घेत्तूण करेहि त्ति । [परिक्रामन् पार्श्वतो विलोक्य] कहं एसा कळावदी

---

१. 'दक्खिस्सं' ख.

एआइणी विवित्ते परुण्णमुही चिट्ठइ । जाव णं सारसिआवुत्तंतं पुच्छिअ वअस्सस्स णिवेदेमि । [उपसर्पति ।] (अम्महे ! किमुद्दिश्य किम् उपक्रमत इति न ज्ञायते आर्यमेधाविनस्तन्त्रम् । यदहमेवं संविहितोऽस्मि । यथा अद्य देव्या कस्मिन्नपि कार्ये नियुज्यमानः तस्या अनुमतिसूचकं लेखं गृहीत्वा कुर्विति । कथमेषा कलावती एकाकिनी विविक्ते प्ररुदितमुखी तिष्ठति । यावदेनां सारसिकावृत्तान्तं पृष्ट्वा वयस्याय निवेदयामि ।)

कलावती— [दृष्ट्वा बाष्पमवमृज्य] कहं दक्खाअणो । (कथं दाक्षायणः ।)

विदूषकः— [सातङ्कं] किमच्चाहिदं सारसिआए । (किमत्याहितं सारसिकायाः ।)

कलावती— [सगद्गदं] संसइदजीविदाए ताए एसा विण्णत्ती महाराअं तुए पावइदव्वा । (संशयितजीवितायास्तस्या एषा विज्ञप्तिर्महाराजं त्वया प्रापयितव्या ।)

विदूषकः— [सभयविषादं] सणिअं कहेहि[1] (शनैः कथय ।)

कलावती— जह -
धण्णा खु इत्थिआ सा जा तुमं एक्कं खणं वि सुहएदि ।
[2]मह उण दव्वहदाए सुइरं आआसिदोसि मरिसेहि ॥१॥ त्ति ।

(यथा- धन्या खलु स्त्री सा या त्वामेकं क्षणमपि सुखयति ।
मम पुनर्दैवहतायाः सुचिरमायासितोऽसि मर्षय ॥ इति ।)

---

१. 'हि कहेहि', क. ग.
२. 'मह ए उण' क. ङ.

विदूषकः— [ निःश्वस्य ] अदिकरुणं एदं । (अतिकरुणमेतत् । )

कलावती— होदु, ण एदं दाणिं वित्थरणिज्जं । कहिं तुमं पत्थिदोसि । ( भवतु, नैतदिदानीं विस्तरणीयम् । कुत्र त्वं प्रस्थितोऽसि । )

विदूषकः— देवीदंसणाअ उइद उवाअणं पुच्छिदेण अय्यमेहाविणा दिण्णं विचित्तवण्णं कंवि सारसपक्खिं कमळावदीए दाऊण सारसिआविरहाणळधूमिज्जंतहिअअं वअस्सं आसासेदुं गच्छेमि ।

(देवीदर्शनायोचितमुपायनं पृष्टेनार्यमेधाविना दत्तं विचित्रवर्णं कमपि सारसपक्षिणं कमलावत्यै दत्त्वा सारसिकाविरहानलधूमायमानहृदयं वयस्यमाश्वासयितुं गच्छामि । )

कलावती— कदा णु कमळकेदू महाराअं दक्खिस्सदि । ( कदा नु कमलकेतुर्महाराजं द्रक्ष्यति । )

विदूषकः— सो खु कमळावदीए समं देवीसहिदं महराअं दक्खिस्सदि त्ति महंतेण ऊसाहेण अत्थाणिं गदो अय्यमेहावी । ( स खलु कमलावत्या समं देवीसहितं महाराजं द्रक्ष्यतीति महतोत्साहेन आस्थानीं गत आर्यमेधावी । )

कलावती— तुमं कुदो ण गदो । ( त्वं कुतो न गतः । )

विदूषकः— अहं उण जीविदळाहनिमित्तं पुरा पत्थिदं देवदाराहणं अज्ज सुहदिअहे करंतो घरे किं वि विलम्बिदो म्हि । ( अहं पुनर्जीवितलाभनिमित्तं पुरा प्रार्थितं देवताराधनं अद्य शुभदिवसे कुर्वाणो गृहे किमपि विलम्बितोऽस्मि । )

कलावती— ता तुमं ता णं समाअममहूसवं अणुहोहि। अहं उण कहिं वि ठिदा सहीसिणेहोइदं करेमि। (तत् त्वं तावदिमं समागममहोत्सवम् अनुभव। अहं पुनः कुत्रापि स्थिता सखीस्नेहोचितं करोमि।)

[निष्क्रान्तौ।]

प्रवेशकः[1]

---

[ततः प्रविशतः सिंहासनस्थौ देवीराजानौ, तदभिमुखावासनस्थौ कमलावतीकमलकेतू, पार्श्वत उपविष्टो मेधावी, विभवतश्च परिवारः।]



राजा— आर्ये कमलावति! कथञ्चिदाश्वसिहि। ईदृश्येव खल्वियं लोकयात्रा।

कमलकेतुः— वत्से देवि! पर्यवस्थापयात्मानम्।

देवी[2]— [सबाष्पं] ईरिसे महूसवे वच्छं लीळावदिं ण पेक्खामि त्ति जं सच्चं दुरदिक्कमो दव्वणिओओ। (ईदृशे महोत्सवे वत्सां लीलावतीं न प्रेक्षे इति यत्सत्यं दुरतिक्रमो दैवनियोगः।)

मेधावी— देवि! प्रहिताः प्रणिधयः। प्रकाशिष्यते चेयमचिरादेव। तत् कल्याणमेव भविष्यति।

कमलकेतुः— [राजानं विलोक्य सहर्षविस्मयं] प्रियसखादपि

---

१. 'प्रवेशोऽङ्कः' क.
२. 'देवी–ईरि' क. ङ.

प्रकृष्यसे महाराज! महिमातिशयात् । तदियन्तमनेहसं भवन्तमनभ्यक्षयता वञ्चिता वयं विधिना । यतः,

शर्वः सार्वज्ञ[1]गर्वं झटिति विघटयेदात्मनः सोऽपि नूनं
कन्दर्पो रूपदर्पं निजमपि नियतं लज्जया निह्नुवीत ।
स्वीयं निर्वापयेत प्रभुरमृतभुजां प्राभवप्रौढिमानं
वीक्ष्य श्रीचोळपृथ्वीपरिवृढ! भवतो रीतिमेतामुदाराम् ॥ २ ॥

राजा — कथमर्थवादोऽयमत्रभवताप्युपक्रान्तः ।

कमलकेतुः — नहि नहि । वस्तुतत्त्वमेव निरूप्यते । तथाहि—

धैर्यं ते चेद् विदितमिदमाश्चञ्चलः काञ्चनाद्रि
र्गाम्भीर्यं चेत् परिचितमिदं गाध एवाम्बुराशिः ।
औदार्यं चेदधिगतमिदं सोऽपि लुब्धः सुरद्रु-
र्ज्ञातं वीर्यं यदि मनुमहे कातरः कार्तवीर्यः ॥ ३ ॥

मेधावी— सत्यमेतत् ।

कमलकेतुः—

यावद् भावत्कसेना चलति विलसितुं तावदेव प्रधाव-
द्घोटीधाटीसमाटीकनचटुलखुराघातनिर्यद्रजोभिः ।
गाधीभूतान् पयोधीन् सपदि विदधते हन्त भूयोऽप्यगाधान्
भेरीभाङ्कारभीतद्रुतशिखरिचरद्वैरिदाराश्रुधाराः ॥ ४ ॥

राजा— मास्म भवानपि मामेवं स्तावीत् ।

---

१. 'सर्वज्ञ' ब.

कमलकेतुः— कीदृशीयं स्तुतिः । यतः,

हस्तोदस्तावधूतभ्रमितधळधळत्खड्गनिष्कृत्तमूर्ध्नः
कर्तुं दैत्यप्रवीरान् प्रभवत इह ते कीदृशा मर्त्यपाशाः ।
दृप्यद्दन्तीन्द्रकुम्भस्थलदलनपटोः किन्तु कण्ठीरवस्य
श्रीचोलक्ष्माप ! चित्रं भवति मृगशिरःपीठिकापाटनेषु ॥ ५ ॥

राजा— [सविनयं] अति हि प्रसजति[1] वात्सल्यादुक्तिचातुरी । तद्विरम्यताम् ।

कमलकेतुः— [सस्मितं] आः प्रागेव विरताः स्मः । यतो वाङ्मनसपथातिवर्तीनि[2] तव चरितादभुतानि ।

राजा— [सोत्प्राशं] तत्रभवतो विजयोदन्तममी वयं शुश्रूषामहे ।



कमलकेतुः— (स्वगतं) अहो महाराजो निजश्लाघां न सहते । भवतु । मद्विजयप्रक्रमोऽपि[3] क्रमादमुष्य प्रतापप्रशंसामेव फलिष्यति । (प्रकाशं) एष कथयामि ।

मेधावी— स्थाने पृष्टं देवेन ।

कमलकेतुः—

युष्माभिः कृतनिग्रहस्तत इतः क्रामन् बलैरुद्धतो
डिल्लीशो नगरीमरुन्ध ननु मे सम्बन्धगन्धेन ते ।
तत्तुभ्यं विनिवेद्य पत्रमुखतो युद्धाय बद्धादरो-
ऽप्यासं वर्षमुदासितो न सहसा कार्याणि कुर्यादिति ॥ ६ ॥

१. 'प्रसरति' क.  २. 'मनसोः पथा' क. ख. ग. ङ.
३. 'तद्वि' क. ग घ. ङ.

राजा— परीक्ष्यकारिता हि प्रशस्यते कर्मसु।

मेधावी— ततस्ततः।

कमलकेतुः— ततश्च सर्वतोऽपि निरुद्धप्रसरायां वाराणस्यां परिहीयमाणपरिमितविभवतया [1]परिगलति तावत् [2]प्रभावे सुमन्त्रासान्निधानान्मन्दीभवन्त्यामपि मन्त्रसम्पदि तादात्विकतनयाविरहादुत्सीदति च पुनरुत्साहे,

देवी— (सभयं) ता णअरीणिरोहादो पुढमं एव्व तत्तहोदा किं त्ति ण णिग्गदं। (तर्हि नगरीनिरोधात् प्रथममेव तत्रभवता किमिति न निर्गतम्।)

राजा— मा मैवम्॥

प्रचलेन्नृपतिः स्थानात् प्रबले यदि वैरिणि।
लभते नास्पदं भूयो लघुश्चण्डे यथानिले॥ ७॥

मेधावी— एवमेतत्।

कमलकेतुः— राजन्यतासहजाभिमानमात्रपरिग्रही निर्धारिततनुविगमश्चन्द्रमूर्धानं नमस्य [3]मौलेन बलेन समराय निरगामेव नगरात्।

राजा— (सश्लाघं) राजन्यो हि नात्मन्यभिभवं तितिक्षते।

देवी— एत्तिअम्मि वि आतङ्के खत्तिआणं केत्तिओ अहिमाणो। (एतावत्यप्यातङ्के क्षत्रियाणां कियानभिमानः।)

---

१. 'प्रविग' क. ग. घ. ङ.  २. 'प्राभवे' ग.
३. 'मौलेन सम' ख.

मेधावी— महदिदमातङ्कस्थानम् ।

कमलावती— किं दाणिं वि दारुणो सो अवसरो सुमरिदव्वो। ( किमिदानीमपि दारुणः सोऽवसरः स्मर्तव्यः )

राजा— ततस्ततः ।

कमलकेतुः— ततश्च मयि निर्गच्छति,

उद्वेलानल्पकल्पक्षयसमयसमुज्जृम्भमाणाम्बुराशि-
क्षोभप्राग्भारसारप्रजवनपवनाक्षेपदक्षैस्तुरङ्गैः ।
आवृत्याकाण्डवात्यासममथ विविधैरायुधैर्योधयन्तो
म्लेच्छाः स्वेच्छाविहारं व्यधुरधिसमरं दाववह्नेर्वरण्ये ॥ ८ ॥

राजा— ( आकाशे लक्ष्यं बद्ध्वा ) रे रे यवनपते! प्रकृत्य-मित्रोऽपि प्रशंसनीयपरिकरोऽसि ।



मेधावी— ततस्ततः ।

कमलकेतुः— तदनु च निरनुचरोऽपि तुङ्गतुरङ्गाधिरूढो धृतासिखेटो महदनीकमहमनीनशमेकाकी ।

मेधावी— किमयमपूर्वः पराक्रमप्रक्रमस्तत्रभवतः ।

राजा— ततस्ततः ।

कमलकेतुः— ततश्च,

व्यूहे निवेश्य यवनेश्वरमश्वसादी
सेनापतिस्सपदि तस्य ममाविरासीत् ।

देवी— अम्महे ! सम्पहारो इदो वरं सुणिदव्वो । तदो तदो ।
( अम्महे ! सम्प्रहार इतःपरं श्रोतव्यः । ततस्ततः । )

कमलकेतुः— ततः परम्–अथवा,

रुष्टावहो प्रहरणै रुधिरावसिक्तौ
छिद्रैषिणौ समचरावहि चित्रमार्गैः ॥ ९ ॥

राजा— अतिदारुणं खलु [1]वीरवृत्तं नाम ।

दुरुच्छेदो हि संरम्भो वीरयोरभियुक्तयोः ।
परस्परस्य दृश्येते यावज्जयपराजयौ ॥ १० ॥

देवी— अम्मो ! तिणग्गळग्गसलिळबिंदुसरिसप्पाणा खु खत्तिअजादी । ( अम्मो ! तृणाग्रलग्नसलिलबिन्दुसदृशप्राणा खलु क्षत्रियजातिः )

मेधावी— अचिरप्ररूढैरमीभिरेव व्रणकिणैराख्यायते समरनैष्ठुर्यम् ।

राजा— ततस्ततः ।

कमलकेतुः— ततश्च राजदुर्गनिर्गते भवत्प्रहिते विजयसेने सुमन्त्रेण सममतर्कितोपनते,

दार्ढ्यं यत्किञ्चिदिच्छौ तव बलनिलये तेजसि प्रोज्झिहाने
शुष्कैधोभिस्तुलुष्काधिपकरटिघटाघोटकूटैरभावि ।

राजा— ( सहर्षं ) मेधाविन् ! अवसरे समापन्नो विजयसेनः ।

---

१. ‘ वीरव्रतं नाम ’ ग, ‘ धीरव्रतं नाम ’ ब.

मेधावी— सुमन्त्रोऽपि ।

देवी— तदो तदो ( ततस्ततः )

कमलकेतुः— ततश्च,

व्यूहं [1]निर्भिद्य गूहन्नपि बत निपुणैरर्वतां सर्वतः स्वं
जीवग्राहं गृहीतो जरठयवनभूनायकस्तावकेन ॥ ११ ॥

तत्समसमयमेव,

प्रतिकर्तुमनाः पुरतः प्रपतन् परिहृत्य मया समिति प्रहृतिम् ।
पृतनाधिपतिः प्रथितो मथितः प्रपलायत तद्बलमप्यखिलम् ॥१२॥

राजा — साधु रे विजयसेन ! साधु । मरणादतिरिच्यते हि मानिनो जीवतो ग्रहणम् ।



मेधावी— कुतो नु वा तादृशस्य तस्य भवदीयशस्त्रपातपरिपूतकलुषतया गीर्वाण[2]रमणीप्राहुणिकताभागधेयम् ।

कमलकेतुः— महाराज ! मम तु प्रतिभाति—

येऽमी युद्धान्तरद्धा विगमितवपुषो विद्विषः सन्ति तेभ्यो
जीवग्राहं गृहीता विपिनमपि गता भाग्यभाजो यदेतैः ।
गीर्वाणाचार्यनिर्वाहितकृतिषु सदा किन्नरैर्गीयमाना
नैवाकर्ण्या विनम्राननसरसिरुहैर्विक्रमप्रक्रमास्ते ॥ १३ ॥

देवी— अम्मो विहे ! एव्वं दुग्घडं वि घडअंतस्स तुह लीळावदीए किं अवरद्धं । ( अम्मो विधे ! एवं दुर्घटमपि घटयतस्तव लीलावत्या किमपराद्धम् । )

---

१. ' निर्गत्य ' ख.          २. ' रमणप्राहु ' क. ग. घ. ङ.

[1]मेधावी— सत्यमाह भवती । तथाहि—

निर्व्यूढं मतिवैभवेन सुधियामव्याहतप्रक्रमं
कृच्छ्राद्यत्परिणामि तत्क्षणमिदं विध्वंसते विप्लवैः ।
धीमद्वाञ्छनसातिपातिविषयं यद्व्याहतोपक्रमं
सद्यस्तद् घटतेऽपि हन्त तदमी दैवं परं मन्महे ॥ १४ ॥

राजा— ततस्ततः ।

कमलकेतुः— ततश्च भवल्लेखानुरोधेन डिल्लीसमाक्रमणाय प्रस्थाप्य विजयसेनं विश्वेश्वरप्रतिष्ठापनाय[2] च समवस्थाप्य सुमन्त्रं महोपकारिणम् अत्रभवन्तं द्रष्टुमहमागतः ।

देवी— ( सबाष्पगद्गदं ) लीलावदीए पाणिग्गहणमहूसवं अणुहोदुं त्ति भणाहि । ( लीलावत्याः पाणिग्रहणमहोत्सवमनुभवितुमिति भण । )

कमलावती— अवि णाम भवे तारिसं वि भाअहेअं अह्माणं । ( अपि नाम भवेत् तादृशमपि भागधेयमस्माकम् । )

[ कमलकेतुः सनिःश्वासं मेधाविनं प्रेक्षते । ]

मेधावी— ( स्वगतं ) अवसर एष मे मेधाविवरणाय । तत् कुतो विलम्बते दाक्षायणः ।

[ प्रविश्य ]

विदूषकः— वअस्स वड्ढसि संपदं अय्यकमळकेदुसमाअमेण ( वयस्य वर्धसे साम्प्रतमार्यकमलकेतुसमागमेन । )

---

१. 'कमलकेतुः—सत्य' क. ग.  २. 'विश्वेशप्रति' क. ग.

राजा— उपविश सविधे। ( विदूषक उपविशति। ) (जनान्तिकम्) अपि ज्ञायते कापि सारसिकायाः प्रवृत्तिः।

विदूषकः— ( स्वगतं ) कहं देवीए सविहे एव्व पुणो वि एसो पत्थावो। होदु पराहीणो किं करिस्सं। ( राज्ञः कर्णे ) एव्वं विअ। ( कथं देव्याः सविधे एव पुनरपि एष प्रस्तावः। भवतु। पराधीनः किं करिष्ये। एवमिव। )

राजा— ( जनान्तिकं सोद्वेगं निःश्वस्य ) अपि जीवितस्यापि संशयस्तस्याः।

विदूषकः— ( जनान्तिकं ) मा खु दाणिं अधीरो होहि। ( मा खल्विदानीमधीरो भव। )

मेधावी— देव दित्सत्युपायनमार्यकमलकेतुः।

राजा— अनुचितं मे पूज्येनोपायनानयनम्।

कमलकेतुः— ( सस्मितं ) अनुश्रूयत एव सूनवे सौपायना गुरुजना इति। ( विचित्रमणिभूषणादीनि परिजनैरानाय्य पुरत उपहरति। )

कमलावती— वच्छे देवि! अब्भुदवण्णाकिदिं एदं सारसं तुह कीळाकिदे पडिच्छ। [ इति परिजनहस्तात् सारसं गृहीत्वा देवीहस्तमारोपयति ] ( वत्से देवि! अद्भुतवर्णाकृतिमेतं सारसं तव क्रीडाकृते प्रतीच्छ। )

देवी— अह्मे! अह्मकेरं सारसिं एसो अणुकरेदि विअ। ( अहो! अस्मदीयां सारसीमेषोऽनुकरोतीव। )

---

१. 'स्यैव संश', २. 'सूपायना' क. ग. व. क.

राजा— अथकिम् ।

मेधावी— ( सस्मितं ) युक्तरूपमिदं मिथुनम् ।

देवी— ता दाणिं को आणइस्सदि तं सारसिअं । ( तदिदानीं क आनेष्यति तां सारसिकाम् । )

मेधावी— दाक्षायणो वर्तते ।

देवी— दक्खाअण ! भणाहि चंदअळं सारसिं सिग्घं आणेहि त्ति । ( दाक्षायण ! भण चन्द्रकलां सारसीं शीघ्रमानयेति । )

विदूषकः — तह । [ इति प्रस्थातुमुद्युङ्क्ते । मेधावी[2] भ्रूसंज्ञया ज्ञापयति । ] ( तथा । )



विदूषकः— ( सानुस्मरणं ) एसा खु दासीए सुदा मह वअणं ण अणुमण्णेदि । ता तुह अणुमदिसूअअं ळेहं एव्व देहि । ( एषा खलु दास्याः सुता मम वचनं नानुमन्यते । तत् तवानुमतिसूचकं लेखमेव देहि । )

देवी— ( स्वगतं ) सच्चं एव्व एदं ( प्रकाशम् ) अय्य मेहाविं मह ळेहो कोवि ळिहीअदु । ( सत्यमेवेदम् । आर्य मेधाविन् ! मम लेखः कोऽपि लिख्यताम् । )

मेधावी— यदत्र भवत्याज्ञापयति ।

विदूषकः— एसो ळेहपरिअरो । ( एष लेखपरिकरः । )

[मेधावी नाट्येन लिखित्वा देव्यै ददाति । देवी मुद्रयित्वा विदूषकायार्पयति ।]

---

१. ' सारसिं ' क. ग. घ. ङ. २. ' वी संज्ञापयति ' क. ग. घ. ङ.

विदूषकः — ( गृहीत्वा निष्क्रम्य पुनः प्रविश्य ) चंदअळा तं घेत्तूण आअमिस्सदि । अहं उण पुरदो पेसिदो ह्मि । ( चन्द्रकला तां गृहीत्वा आगमिष्यति । अहं पुनः पुरतः प्रेषितोऽस्मि । )

[ ततः प्रविशति दीना सारसिका लेखहस्ता चन्द्रकला च । ]

सारसिका— (स्वगतम्) अह्मो देवीए मइ तारिसस्स पणअस्स कीरिसो परिणामो । ( अहो ! देव्या मयि तादृशस्य प्रणयस्य कीदृशः परिणामः । )

चन्द्रकला — ( स्वगतम् ) अविणाम कमळकेदुसमाअममहूसवे बंधादा विसज्जिदा एसा तवस्सिणी । ( अपिनाम कमलकेतुसमागममहोत्सवे बन्धाद् विसर्जिता एषा तपस्विनी । )

सारसिका— चंदअळे ! कहिं तुए अहं णीएमि । ( चन्द्रकले ! कुत्र त्वयाहं नीये । )

चन्द्रकला— अत्थाणिम्मि । ( आस्थान्याम् । )

सारसिका— अविणाम[1] चिरजीविणीए मह अज्ज वा अहिळसिदं फळिस्सदि । (अपिनाम चिरजीविन्या मम अद्य वाभिलषितं फलिष्यति।)

चन्द्रकला— (स्वगतं) हद्धि हद्धि पमादो पमादो । (हा धिक् हा धिक् प्रमादः प्रमादः । )

राजा— ( सहर्षविस्मयं स्वगतम् ) कथं मन्थनव्यापारमन्तरेण[2] महोदधौ सुधालहरी । ( जनान्तिकं ) वयस्य ! किमन्यदेवेदानीमाविर्भवति ।

---

१. ' णाम जीवि ' क. ग. घ. ङ. २. ' मन्दरव्या ' क. ग. घ. ङ.

विदूषकः— (सभयसंभ्रमं) मए वि ण आणीअदि। (मयापि न ज्ञायते।)

मेधावी— (सहर्षं स्वगतं) फलवती मे सुनीतिलतिका। कमलावतीकमलकेतू सप्रत्यभिज्ञं सहर्षाद्भुतसंभ्रमं पश्यतः।]

राजा— (स्वगतं)

रुजा गात्राण्यस्या लुलितलवलीपल्लवरुची-
न्यधीरो दृक्पातो नियतमकठोरः स्तनभरः।
परिम्लान गण्डस्थलमपि मुखं लोलचिकुरं
दशायास्तत् पश्याम्यहह! करुणायाः परिणतिम् ॥ १५ ॥

सारसिका— (राजानं दृष्ट्वा सनिःश्वासं स्वगतम्) कहं अस्सिं वि ओसरे से दंसणेण पुणो वि मह जीविदे अहिळासो समुम्मिसदि। (कथमस्मिन्नप्यवसरे अस्य दर्शनेन पुनरपि मम जीवितेऽभिलाषः समुन्मिषति।)

कमलावती— (जनान्तिकं) अय्यउत्त! कहं वच्छाए विअ से आकिदी दीसइ। (आर्यपुत्र! कथं वत्साया इवास्या आकृतिर्दृश्यते।)

कमलकेतुः— (निपुणं निर्वर्ण्य) ननु मुग्धे! सत्यमियं वत्सैव। कुतः,

तद्यातं पदयोरिदं यदमुतः केळीं मराली गता
तच्चालोकितमेतदेव यदितो लीलां मृगी शिक्षिता
सैवेयं मम पूर्वजन्मचरितैः पुण्यैरगण्यैः पुरा
याभूत किं बहुना दृशौ यदधुना मग्ने सुधावारिधौ ॥ १६ ॥

चन्द्रकला— कहं एदाओ कमळकेदुकमळावदीओ। (कथमेतौ

कमलकेतुकमलावत्यौ। )

सारसिका (विलोक्य सहर्षाद्भुतसंभ्रमं) कहं अह्मो! तादो अज्जुआ वि। [सत्वरमुपसर्पति] (कथं अम्मो! तातः अज्जुकापि।)

कमलावती— (सबाष्पगद्गदं) हा वच्छे! कहिंसि। [सरभसमुत्थाय प्रत्युद्गच्छन्ती] हा णिक्करुणे ळीळावदि! मिअसंजीविणो सविहे जीवंतामिअं परिस्सजस्स[1] मं। [इति लीलावतीकमलावत्यौ परस्परं परिष्वज्य रुदन्त्यौ मूर्च्छतः।] (हा वत्से! कुत्रासि। हा निष्करुणे लीलावति! मृतसञ्जीविनः सविधे जीवन्मृतां परिष्वजस्व माम्।)

कमलकेतुः— (सकरुणमुत्थायोपसृत्य सारसिकामङ्के निधाय सबाष्पगद्गदं] अयि वत्से! महाराजभवने सती कथमीदृशीं दशां प्रापितासि। [सर्वे विस्मयस्तिमिताः पश्यन्ति।]

राजा— (सहर्षविस्मयं) कथं दीपप्रभया सन्तमसमपनिनीषता दिनश्रीरेव समासादिता। यत्सारसिकया खेदमपनेष्यतो लीलावत्या एव लाभः।

विदूषकः— कहं सारासिआ एव्व ळीळावदी। (कथं सारसिकैव लीलावती।)

चन्द्रकला— (स्वगतं) णहु महाराअस्स अहिळासो अणुइदे पदे पदं करेदि। (न खलु महाराजस्याभिलाषोऽनुचिते पदे पदं करोति।)

मेधावी— (स्वगतं) सम्प्रति देवी किं प्रतिपद्यताम्।

---

१. 'स्सज मं' क. ग. घ. ङ.

देवी (स्वगतं) कहं दाणिं समावण्णं । (प्रकाशं) अय्य कहं एसा एव्व मह वहिणी । (कथमिदानीं समापन्नम् । आर्य ! कथमेषैव मम भगिनी ।)

कमलकेतुः — अथकिम् ।

देवी— (सनिःश्वासं लीलावतीकमलावत्यावुपेत्य) समस्ससह समस्ससह (समाश्वासितं समाश्वासितम् ।) [उभे समाश्वसितः ।]

लीलावती— (सविस्मयं) किण्णुं मए सिविणओ अणुभवीअदि। आदु इंदजाळिअं एव्व एदं । (किन्नु मया स्वप्नोऽनुभूयते । अथवा ऐन्द्रजालिकमेवेदम ।

देवी— (स्वगतं) पुरा अविण्णादाए से तारिसं सक्कारं करिअ दाणिं अय्याणं पुरदो एआरिसीए दसाए हेदु ह्मि त्ति जं सच्चं अंगेसु एव्व ळीएमि । [प्रकाशं– लीलवतीमुपेत्य] अइ कठोरे अळं एत्तिअं काळं वंचणाए, ता परिस्सजस्स मं । [इति गाढं परिष्वजते ।] (पुरा अविज्ञाताया अस्यास्तादृशं सत्कारं कृत्वा इदानीमार्याणां पुरत एतादृश्या दशाया हेतुरस्मीति यत्सत्यमङ्गेषु एव लीये । अयि कठोरे ! अलमियन्तं कालं वञ्चनया । तत् परिष्वजस्व माम् ।)

लीलावती— (सभयं परिष्वज्य स्वगतं) अह्मो देवी एव्व दाणिं मइ वच्छळा जादा । (अम्मो देव्येवेदानीं मयि वत्सला जाता ।)

देवी— (स्वगतं) हद्धि हद्धि । दूसहो से सरीरसंदावो । ता कहं झत्ति णिवारेमि । (हा धिक् हा धिक् ! दुस्सहोऽस्याः शरीरसन्तापः। तत् कथं झटिति निवारयामि ।)

चन्द्रकला— देवि! दिट्ठिआ वड्ढसि बहिणीसमाअमेण।
(देवि! दिष्ट्या वर्धसे भगिनीसमागमेन।)

देवी— (सहर्षं) चंदअळे! कुदो काळणादो णं अत्थाणं आणेसि। (चन्द्रकले! कुतः कारणादेनां आस्थानमानैषीः।)

चन्द्रकला— (स्वगतं) कहं सअं एव्व आणविअ पुच्छदि। (प्रकाशं) णं तुह एव्व आदेसादो। (कथं स्वयमेवाज्ञाप्य पृच्छति। ननु तवैवादेशात्।)

[देवी सविस्मयं मेधाविनमीक्षते।]

मेधावी— (सस्मितं[1]) चन्द्रकले! मृगयायां महाराजगृहीतां लक्ष्मणामानयेति किल मया लिखितम्।

चन्द्रकला— (ससंभ्रमं) का पसत्ती। णं ळेहो एव्व कहइस्सदि (का प्रसक्तिः। ननु लेख एव कथयिष्यति।)

राजा— दाक्षायण! लेखं वाचय।

विदूषकः— (गृहीत्वा वाचयति।) जा अय्यउत्तगहीदा सारसिआ तुह वसे[2] मए णिहिदा तं[3] अज्ज पंजरादो हत्थे घेत्तूण झत्ति आणेहि त्ति। (या आर्यपुत्रगृहीता सारसिका तव वशे मया निहिता तामद्य पञ्जराद् हस्ते गृहीत्वा झटिति आनयेति।)

देवी— सहि! जुज्जइ दे णामदो अत्थदो वि भमो। (सखि! युज्यते ते नामतोऽर्थतोऽपि भ्रमः।)

---

१. (सस्मितं-चन्द्रकलां प्रति) क. ग. घ. ङ.

२. 'वसे णिहि' क. ग. घ. ङ. ३. 'तं पंज' क. ग. घ. ङ.

कमलकेतुः— ( संहर्षं स्वगतं ) कथं महाराजेनैव परिगृहीतेयम् ।

विदूषकः— ( स्वगतं ) कहं कळावदीए अवणीअ एदाए वसे [1]किदा। ( कथं कलावत्या अपनीयैतस्या वशे कृता । )

राजा— ( सकरुणं स्वगतं ) कथमियं पञ्जरे स्थापिता ।

कमलावती— ( सविस्मयं ) कहं एदाए एत्थ सारसिएत्ति णामहेअं । ( कथमेतस्या अत्र सारसिकेति नामधेयम् । )

देवी – अय्ये! सुणाहि एदं वुत्तंतं। एसा खु महामहूसवे कण्णातित्थसरस्स तीरे विवित्ते मह ह्लाणघट्टए एआइणी चिट्ठंती पय्याउळा दिट्ठा। पुच्छिदा वि ण कुळसीळणिळअणामहेआइं कहिद-वदी। मए उण गुणरूवपच्चआदो अकाळणसिणेहाणुबंधादो संगम-काळिअमंगळणिमित्तादो अ महाभाआ एसेत्ति मण्णिअ घरं आणीअ रक्खिदा। ( आर्ये! श्रृण्वेतद् वृत्तान्तम् – एषा खलु महामहोत्सवे कन्यातीर्थ-सरसः तीरे विविक्ते मम स्नानघट्टके एकाकिनी तिष्ठन्ती पर्याकुला दृष्टा। पृष्टापि न कुलशीलनिलयनामधेयानि कथितवती। मया पुनर्गुणरूपप्रत्ययादकारण-स्नेहानुबन्धात् सङ्गमकालिकमङ्गलनिमित्ताच्च महाभागैषेति मत्वा गृहमानीय रक्षिता । )

मेधावी— युष्माभिरेव तदनु सरसः सम्बन्धादिदं नाम कृतं भवेत् ।

देवी— एव्वं एदं । ( एवमेतत् । )

कमलावती— वच्छे! कुदो एव्वं किदवदी। ( वत्से! कुत एवं कृतवती । )

---

1. ' किदा। देवी – अय्ये ' क. ग. ब. ङ.

लीलावती— ( सगद्गदं ) तुह्माणं तारिसं अच्चाहिदं मह तारिसिं दसं अ उल्लिहिअ कोवि एसो अह्माण काळो त्ति मण्णंती तह ठिदह्मि । ( युष्माकं तादृशमत्याहितं मम तादृशीं दशां च उल्लिख्य कोऽप्येषोऽस्माकं काल इति मन्यमाना तथा स्थितास्मि । )

देवी— अह्मो ! एदाए गभीरदा । ( अम्भो ! एतस्या गभीरता । )

राजा— ( सविस्मयं स्वगतं )

आस्तां तन्निखिलं यदत्रभवती सप्ताष्टमासानिमां
हन्तागूहत मन्दिरान्तरुचितामभ्यर्हणां कुर्वती ।
तद्व्यस्मापयदस्मदीयहृदयं पृष्टापि नाचष्ट य-
ज्ज्ञानत्येव जनं निजं जनमिमं जातिं कुलं नाम वा ॥ १७॥

कमलकेतुः — वत्से ! क्व सा मन्दाकिनी ।

लीलावती— सा खु मं विवित्ते ठाविअ ह्वादुं ओदिण्णा तहिं एव्व सरम्मि मज्जिदा । ( सा खलु मां विविक्ते स्थापयित्वा स्नातुमवतीर्णा तत्रैव सरसि मज्जिता । )

मेधावी— ( सवितर्कं ) इत्थमविपर्यासादेव दैवसंघटिते प्रकृते न तदप्यन्यथा भवेत् । भवतु, लोकपावनीतस्तदपि जानीमः ।

विदूषकः— ( सविमर्शं स्वगतम् ) सव्वं वि एदं मेहाविणा णाअदि विअ पडिहाइ । होदु विवरिस्सं । ( प्रकाशं सस्मितं ) किंवि अजाणंतो विअ अहिणअंतो केत्तिअं करेदि अय्यमेहावी । ( सर्वमप्येतद् मेधाविना ज्ञायत इव प्रतिभाति । भवतु, विवरिष्यामि । किमप्यजानन्निवाभिनयन् कियन्तं करोत्यार्यमेधावी । )

---

१. ' तद्विस्मापयतेऽस्म ' क. ग. घ. ङ.

२. ' इत्थं विप ' ख.  ३. ' घट्टिते ' ग.

देवी— (सवितर्कं) अवि तुह लेहब्भत्थणा अय्यमेहाविणो तंतं । (अपि तव लेखाभ्यर्थना आर्यमेधाविनस्तन्त्रम् ।)

विदूषकः— (सस्मितं) को संदेहो । (कः सन्देहः ।)

मेधावी— (सस्मितं स्वगतं) काममितः परं सर्वं प्रकाश्यताम् ।

कमलावती— ता सारसोपाअणप्पेसणं वि एदण्णिमित्तं भविस्सदि । (तत् सारसोपायनप्रेषणमपि एतन्निमित्तं भविष्यति ।)

विदूषकः— एव्वं एव्व । (एवमेव)।

चन्द्रकला— जदि एव्वं ह्विओ दिणे लेहो वि ण पमादणिक्खित्तो त्ति तक्केमि । (यद्येवं ह्यो दिने लेखोऽपि न प्रमादनिक्षिप्त इति तर्कयामि ।)

देवी— तदो किं पओअणं। (ततः किं प्रयोजनम् ।)

चन्द्रकला— तुह मुहादो लीलावदीए पाणिग्गहणणिद्धारणं (तव मुखाल्लीलावत्याः पाणिग्रहणनिर्धारणम् ।)

मेधावी— (स्वगतं) चतुरैव चन्द्रकला ।

राजा— मेधाविन्! मैत्रायण्यपि भवत्प्रणिधिरिति नः प्रतिभाति ।

मेधावी— (सस्मितं) अथकिम् ।

कमलकेतुः— (सविस्मयं) भो मेधाविन्!

उपक्रम्यैवार्थानुपचयवतो नाभिदधता-
मुपायानप्येषामुचितसमये संविदधताम् ।

भजन्तां ताटस्थ्यं परिणमति कृच्छ्रादपि फले
भावादक्षं कश्चिद् बत न कलयामो न शृणुमः ॥ १८ ॥

राजा— नूनमद्भुतमेतदनुल्लिखितं च केनचिन्मेधाविनः संविधानम् । कुतः,

न बीजं कार्यस्याधिगतमपि यत्नो न विदितो
न संरम्भो ज्ञातो न पुनरवमर्शोऽप्यवधृतः ।
कृता चैदम्पर्यव्यवसितिरपि त्वेतदखिलं
फलेनैवोन्नेयं कृतमिव पुराजन्मसु नृणाम् ॥ १९ ॥

[ मेधावी वैलक्ष्यं नाटयति । ]

देवी— ( सस्मितं ) अय्यउत्त एदाणं अय्याणं कमळकेदुमेहाविणं इमाए ळीळावदीए अ अहिळासो अस्सिं एव्व मुहुत्तए पूरइदव्वो[1] त्ति मणरहो मं तुवरावेदि । ( आर्यपुत्र ! एतयोरार्ययोः कमलकेतुमेधाविनोः अस्या लीलावत्याश्च अभिलाषोऽस्मिन्नेव मुहूर्तके पूरयितव्य इति मनोरथो मां त्वरयति । )

राजा— ( सहर्षं स्वगतं ) एष खलु मुषितस्वीकरणायैव चोरं प्रति सान्त्वप्रयोगः ।

विदूषकः— ( स्वगतं ) इक्खुभक्खिआए किं वेदणापेक्खा । (इक्षुभक्षिकायै किं वेतनापेक्षा । )

मेधावी— देवि ! तवैव युक्तरूपमिदं वचनम् । अतः परं देवः प्रमाणम् ।

राजा— यथा भवद्भ्यो रोचते ।

कमलकेतुः— अहो ! मेधाविनः प्रतिज्ञानिर्वर्तनचातुरी ।

---

१. ' पूरिदव्वो ' ख.

कमलावती— अह्मो ! दाणिं अतक्किदोवणदो महूसवो । ( अहो ! इदानीमतर्कितोपनतो महोत्सवः । )

[ लीलावती सलज्जं राजानमपाङ्गयते । ]

राजा— ( शृङ्गारचेष्टां नाटयन् स्वगतं ) हृदय ! किमिदानीमभिजानासि ।

विस्मितघटनं मम यद् विहतिप्रतिसन्धिविगमितविलम्बम् ।
विलसितमस्यामासीद् विचलति पर्णेऽपि कान्दिशीकायाम् ॥ २० ॥

( सविमर्शं ) अहो निर्भरश्चमत्कारः ।

उपक्षिप्तो रसः कोऽपि वीरः कमलकेतुना ।
करुणाद्भुतशृङ्गारैरनया कर्बुरीकृतः ॥ २१ ॥

देवी— ता किं विळम्बीअदि । चंदअळे एदं वुत्तंत णिवेदिअ तत्तहोदीओ ळोअपावणीमरुविहाओ सण्णिहावेहि । एदं अ सारसं सारसीए पंजरे ठावेहि । ( तत् किं विलम्ब्यते । चन्द्रकले ! एतद् वृत्तान्तं निवेद्य तत्रभवत्यौ लोकपावनीमरुद्वृधे सन्निधापय । एतं च सारसं सारस्याः पञ्जरे स्थापय । )

चन्द्रकला— जं देवी आणवेदि । [ सारसं गृहीत्वा प्रस्थिता । ] ( यद्देव्याज्ञापयति । )

कमलावती— वच्छे देवि ! अय्यं दीवंविअं वंदिदुं इच्छेमि । ( वत्से देवि ! आर्यां दीपाम्बिकां वन्दितुमिच्छामि ।

देवी— एहि[1] । सिग्घं ळीळावदीए समं ताए पिअं णिवेदआमो । ( एहि । शीघ्रं लीलावत्या समं तस्याः प्रियं निवेदयामः । )

[ निष्क्रान्तः स्त्रीवर्गः । ]

---

१. 'वधि' क. १. 'हि एहि सिग्घं' क. ग. घ. ङ.

कमलकेतुः— चिरदृष्टाम् महाराजजननीं प्रियधर्मदारानहमपि दिदृक्षे ।

राजा— मेधाविन् ! प्रापयैनमम्बायाः सन्निधिम् ।

मेधावी—यद्देव आज्ञापयति । [इति कमलकेतुना सह निष्क्रान्तः ।]

राजा— ( विमृश्य सहर्षं )

दिष्ट्या सारसिकेव नः प्रियतमा जाताद्य लीलावती
दिष्ट्या तामपि दित्सति स्वयमसौ देवी स्वतन्त्रेव मे ।
दिष्ट्यैनां कुलशीललक्षणवतीमम्बापि सम्मंस्यते
दिष्ट्यास्मिन्नयतिष्ट साधुनि फले मेधाव्यपि श्रेयसे ॥ २२ ॥

विदूषकः— ( परितो विलोक्य सहर्षं ) अह्यो ! खणेणेवाळंकिदं णिहिळं वि राअभवणं । ( श्रुतिमभिनीय ) मंगळमिअंगसंघरवमिस्सा विविहवादित्तघोसा सुणीअंति । ( अहो ! क्षणेनैवालंकृतं निखिलमपि राजभवनम् । मङ्गलमृदङ्गशङ्खरवमिश्रा विविधवादित्रघोषाः श्रूयन्ते । )

राजा— तद् भगवत्यागमनात् प्रागम्बायाश्चरणम् उपसंजिघृक्षामि ।

विदूषकः— ता झत्ति उट्ठेहि । तह करिअ कळ्ळाणवेदिअं एव्व गच्छह्म । ( तदुत्तिष्ठ । तथा कृत्वा कल्याणवेदिकामेव गच्छावः । )

[ इत्युत्थाय परिक्रम्य निष्क्रान्तौ । ]

अङ्कावतरणमिदम् ।

षष्ठोऽङ्कः

सप्तमोऽङ्कः ।

[ ततः प्रविशतो योगिन्यौ । ]

एका— इत इतो लोकपावनी ।

लोकपावनी— मरुद्वृधे ! रमणीयोदारं खलु राजभवनम् ।

मरुद्वृधा— विशिष्य सम्प्रति विवाह[1]महोत्सवसन्नाहे[2] । तथाहि,

एतत् तोरणधोरणीविलसितं कीर्णं पताकाशतै-
रुन्नद्धक्रमुकं निबद्धकदलीस्त[3]म्भं गृहं भासते ।

अपि च,

एताः कौतुकयन्त्रिता युवतयो भूषाम्बरैरुज्ज्वलाः
कृत्येषु व्यतिशासते तत इतो बम्भ्रम्यमाणाः पुरः ॥ १ ॥

लोकपावनी— सखि ! वाराणस्यामपि न पुनरुत्सुकास्मि वत्सचोळराजपुरनिवासेन ।

मरुद्वृधा— अहो [4]माहाभाग्यं भोसलकुलमहीभुजाम् । यतः,

दिलीपस्यापत्ये यदपि भजमाने न विहितं
न वा पुत्रे भीष्मे किमुत न कुमारे भगवति ।
तदेतद् वात्सल्यं निरुपधि परं दर्शितवती
महाराजे चोळक्षितिपरिवृढे तत्रभवती ॥ २ ॥

---

१. ‘हेम’ ख.　　२. ‘सन्नाहेन’ ग. घ. ङ.
३. ‘म्भग्रहं’ ख.　　४. ‘महाभाग्यं’ ग. घ. ङ.

लोकपावनी— नन्वनेन परवशीकृतास्मि परिचर्यया । पश्य,

आगत्यान्तिकसीम्नि तिष्ठति चिरादास्तेऽनुशिष्टोऽपि न
प्रह्वो नः प्रतिपालयत्यवसरं बह्वात्मनीनश्रुतेः ।
त्रैवर्गाण्यपि[1] साधनानि नियमेनासेवते[2] बोधितः
किं भूयः कथनैरमुष्य चरितैराकृष्यते मे मनः ॥ ३ ॥

मरुद्वृधा— एवमेतत् । किञ्च अधुना मेधाविनि[3] त्वदनुरोधीत्यपि तस्य भूयसी प्रीतिरिति मन्ये ।

लोकपावनी — आम सखि ! आम । [नेपथ्ये कलकलः ।]

मरुद्वृधा— (विलोक्य) एष खलु कल्याणवेदिकातो भवतीं प्रत्युज्जिगमिषति महाराजे कञ्चुकिकिरसमुदञ्चितकनकवेत्रयष्टिघातापसृतानां[4] श्रेणीभवतां सामन्तमहीभृतां कोलाहलः ।

लोकपावनी— (विलोक्य सहर्षं) कथमत्रैव कल्याणवेदिकां दक्षिणेन नेपथ्यान्तरिताः कमलावतीमैत्रायणीभ्यां देवीदीपाम्बाप्रभृतयः प्रतिवसन्ति ।

मरुद्वृधा— उत्तरेण च मान्यैः समं महाराजावरजौ शरभकुलजौ[5] कुमारावपि ।

लोकपावनी— न यावदासनादुत्तिष्ठति वत्सः तावदुपसर्पावः ।
[परिक्रामतः ।]

---

१. 'नेन' क. २. 'वि तो बो' क. ख. ग. ङ.
३. 'धाविनोतिः त्वद' क. ४. 'कञ्चुकिसमु' ग.
५. 'तुलजौ' ग. घ.

मरुद्वृधा— [अग्रतो विलोक्य सहर्षं] पश्य भगवति! एष किल गृहीतवैवाहिकवेषतया सविशेषरमणीयो महाराजो मेधाविकमलकेतुभ्यां दाक्षायणेन चान्वीयमान इत एवाभिवर्तते। [ततः प्रविशति यथानिर्दिष्टो राजा विभवतश्च परिवारः।]

राजा— (पुरः पश्यन् सानन्दं) मेधाविन्! पश्य पश्य,

त्रयीवानितराधीना त्रेतेव ज्वलदाकृतिः।
त्रिस्रोता इव भात्येषा पावनी लोकपावनी ॥ ४ ॥

मेधावी— (सहर्षं) ननु पश्यामि। इयं हि,

मरुद्वृधादत्तहस्ता महनीयपरिच्छदा।
सपर्येवाभिनिर्याति श्रद्धासमुपबृंहिता ॥ ५ ॥

कमलकेतुः[1]— (सविस्मयं)

आमीलयन् बहिर्वृत्तिमानन्दः कोऽपि जृम्भते।
आर्यायाः सकृदालोकादाः! कौमुद्या इवाम्बुधिः ॥ ६ ॥

तदस्या मम च नूनमनभिव्यक्तेन[2] केनाचिदनुबन्धेन भवितव्यम्।

विदूषकः— (साद्भुतं) अह्मो! दक्खाअणस्स वि इमस्सिं[3] कोवि वीसासो। (अहो! दाक्षायणस्यापि अस्यां कोऽपि विश्वासः।) [सर्वे प्रत्युद्गच्छन्ति।]

लोकपावनी— [सानन्दं राजानं पश्यन्ती]

सौभाग्यानां किमु समुदयः संगृहीतान्तरात्मा
कल्याणानां किमु निबिडिमा कन्दलज्जीवनाडिः।

---

१. 'तुः-आमी' घ. ङ. २. 'नमभि' ख.
३. 'स्सिं वीसा' ख.

आविर्भूतः किमु जनिमतामार्जितः पुण्यराशिः
किंवा मूर्तः[1] स्फुरति पुरतः क्षत्रधर्मः स एषः ॥ ७ ॥

मरुद्वृधा— ( सविस्मयं )

भीमो यद्यपि[2] जीवति प्रथमतस्तेजोभिरव्याहतैः
कान्तो हन्त तथापि[3] हारिभिरसावालोकसूक्तिस्मितैः ।
आतः पुष्पवतोरयं व्यतिकरः सत्यं नृपत्यात्मना
पश्येह प्रतिभाति संहृततमोवृत्तिः प्रजानामसौ ॥ ८ ॥

राजा— ( सविनयमुपसृत्य ) भगवति ! तत्रभवतीमैकराजिरभिवादयते ।

लोकपावनी— ( सबहुमानं राज्ञो भुजशिखरमामृशन्ती )

आ गौरीचरणारविन्दयुगलीविन्यासधन्यान्तरा-
दा मन्दानिललोलचन्दनवनामोदप्रियम्भावुकात् ।
आ चास्तादपि चोदयाद् गिरिवराद् गुर्वीयमुर्वीधुरा[4]
वीरश्रीरिव तावके भुजवरे शश्वत् परिक्रीडताम् ॥ ९ ॥

राजा— (सप्रश्रयं ) अवितथा खलु भगवत्याः सरस्वती ।

मेधावी— आर्ये ! भारद्वाजो मेधावी अहमभिवादये ।

लोकपावनी— ( सस्मितं )

औशनसी नीतिर्या या चाङ्गिरसी तयोरुभयोः ।
निष्णातेव[5] मतिस्ते पुष्णातु मुदं प्रतीच्यपि स्फुरणे ॥ १० ॥

---

१. 'मूर्तिः' क. ग. घ. ङ. २. 'दीव्यति' ग. घ. ङ.
३. 'थाभिहारि' ग. ४. 'धरा' ख.
५. 'निष्क्रान्तेव' क, निष्णातैव ग. घ. ङ.

मेधावी— ( सविनयं ) अन्यदुर्लभमिदमाशीर्वचनम् ।

कमलकेतुः— भगवति ! नमस्ते ।

लोकपावनी — ( स्वगतं ) दिष्ट्या दृष्टश्चिराय कमलकेतुः । ( प्रकाशं ) अभिलषितसिद्ध्या वर्धतां भवान् ।

विदूषकः -- भअवदि ! एसो दक्खाअणस्स[1] सट्टंगो पणामो । ( भगवति ! एष दाक्षायणस्य साष्टाङ्गः प्रणामः । )

लोकपावनी— ( सहासं ) आयुष्मान् भव ।

मेधावी— अहो ! महानयं पावनोदारगभीरमधुरो महनीयः समवायः ।



लोकपावनी— ( राजानं[2] प्रति ) वत्स ! तदस्मिन्नेव सुमुहूर्ते भवान् कल्याणवेदिमध्यमध्यास्ताम्[3] ।

राजा— यदाज्ञापयति भगवती । [ इति सर्वे यथोचितमुपविशन्ति । ]

राजा— ( सप्रश्रयं ) अगोचरे किल वाचां भगवत्यनुभावः । यतः सम्प्रति,

प्रसीदत्यन्तर्नः करणमपि सत्त्वं विजयते
रजो मज्जत्याशु क्वचिदपि तमस्तन्निलयते ।

---

१. ' स्स वि सट्टं ' क. २. ' प्रति) तदस्मि ' ख.
३. ' स्ताम् । यदाज्ञपयतीति सर्वे ' ख.

समिन्धे सौजन्यं प्रविसरति चैतन्यमचिरात्
प्रथन्ते भद्राणि [1]प्रविलसति चानन्दलहरी ॥ ११ ॥

मेधावी— एवमेतत् ।

लोकपावनी— वत्स ! यद्यपि स्वभावोऽयं भोसलकुलजनुषां यत् साधुसमागमाभिधानलाभादिवामोदः । तदपि विशिष्य,

इष्टापूर्ततपोभिर्भजते न तथा भवन्मनः [2]प्रमदम् ।
श्रीचोळभूमितिलकः क्षणमपि साधुजनसङ्गमेन यथा ॥ १२ ॥

मरुद्वृधा— भगवति ! नन्वयमेवावसरो भगवत्य[3]वधारितो लीलावत्याः परिणये ।

लोकपावनी – सत्वरं,

सोऽयं माङ्गलिको मुहूर्त उदितस्तद् वत्स ! सन्नह्यतां
मेधाविन्नवधेहि भो वितर ते काशीपते ! कन्यकाम् ।
त्वं दाक्षायण ! वाचयस्व मनुभिः स्वस्ति प्रशस्ति गतैः

[ नेपथ्याभिमुखमवलोक्य ]

कल्याणीं च कला[4]वति ! द्रुतमितो लीलावतीमानय ॥ १२ ॥

[ सर्वे यथोचितमाचरन्ति । ]

[ ततः प्रविशति वैवाहिक[5]वेषालङ्कृता लीलावती, कलावती च । ]

लीलावती— ( सहर्षं ) हळा कळावदि ! तह दुल्लहवल्लह-

---

१. ' प्रविसरति ' क. ग. घ. ङ. २. ' प्रसादम् ' ख.
३. ' त्यावधा, ' ग. घ. ङ. ४. ' वतीं युत ' क.
५. ' कालङ्कृता लीला क, ' कालङ्कृतवेषा लीला ' ग. घ. ङ.

विळोॅअमेत्तकहाए मह एत्तिओ महूसवो त्ति जं सच्चं दाणिं वि ण मे वीसासो । ( हला ! कलावति ! तथा दुर्लभवल्लभविलोकमात्रकथाया ममैतावान् महोत्सव इति यत् सत्यमिदानीमपि न मे विश्वासः । )

कलावती – ( सोत्प्राशं ) हळा सारसिए [ इत्यर्धोक्ते ] हळा लीलावदि ! अच्चासत्तीए एसो महिमा । ( हला सारसिके ! हला लीलावति ! अत्यासक्त्या एष महिमा । )

लीलावती — [ स्मितं कृत्वा ] ' सहि सारसिए ' त्ति एव्व तुह्माणं वाहारो सोहदि । ( ' सखि ! सारसिके ' इत्येव युष्माक व्याहारः शोभते । )

कलावती— ( सस्मितं ) णहु सक्कं इदो वरं उभअं वि[2] मंतिदुं । जं दाणिं देवी भविस्ससि । ( न खलु शक्यमितः परमुभयमपि मन्त्रयितुम् । यदिदानीं देवी भविष्यसि । )

लीलावती— ( लज्जां नाटयन्ती ) भअवदीए दंसणुक्कंठा मं तुवरावेदि । ( भगवत्या दर्शनोत्कण्ठा मां त्वरयति । )

कलावती— ( सस्मितं ) महाराअस्सेत्ति भणाहि । ( महाराजस्येति भण । )

लीलावती— (सासूयं ) किदं परिहासेण, सच्चं एव्व एत्तिअम्मि वि काळे[3] मए सा ण विळोइदा । [परिक्रामतः ।] ( कृतं परिहासेन । सत्यमेवैतावत्यपि काले मया सा न विलोकिता । )

राजा— (नायिकां विलोक्य सहर्षं स्वगतं) अहो ! निसर्गसुन्दर्या वैवाहिकवेषेण सविशेषरामणीयकम् । तथाहि,

---

१. ' अणमेत्त ' क. ग. घ. ङ. २. ' वि मंतदुं ' क. ग घ. ङ.
३. ' काळो मए ' क. ग. घ. ङ.

चम्पकरुचिराङ्गीयं चञ्चलभूषादुकूलसंवीता ।
चञ्चति काञ्चनलतिका चलपल्लवभृत्समग्रकुसुमेव ॥ १३ ॥

लीलावती— कहं दाणिं वैवाहिअस्स अय्यउत्तस्स दंसणे पुढमदंसणादो वि अहीरा मह दिट्ठी । (कथमिदानीं वैवाहिकस्य आर्यपुत्रस्य दर्शने प्रथमदर्शनादप्यधीरा मम दृष्टिः ।)

कलावती– कहं तुह दाणिं एव्व अय्यउत्तो । (कथं तवेदानीमेवार्यपुत्रः ।)

[ लीलावती लज्जते । ]

लोकपावनी — (दृष्ट्वा सप्रत्यभिज्ञं जनान्तिकम्) मरुद्वृधे ! सैषा किल पुरा,

वत्सलयोरपि पित्रोर्वत्सरमेकमपि नाध्यगाद् वत्सा ।
अध्वनि गान्धर्वे मम सध्वनि वचसां करग्रहे सुहिता ॥ १४ ॥

किञ्च,

तैस्तैरद्भुतनूतनैर्जनपदग्रामाटवीपर्वते-
ष्वाख्यानैरपनीतदूरपदवीखेदात् प्रमादादपि ।
स्थातुं भोक्तुमथासितुं शयितुमप्यासीत् कदाप्युत्सुका
मार्गे या न विना मनागपि मया सेयं पुरो दृश्यते ॥ १५ ॥

मरुद्वृधा— इयं किल प्रतिदिनमन्तःपुरे,

---

१. 'ङ्गी यच्चञ्च' क. २. 'वभ्रमत्समग्र' ख.
३. 'वती - (स्वगतं) कहं' क ख. ग. घ. ङ.
४. 'वेवाहिआ अय्य' क. ग. घ. ङ.
५. 'यैषा किल' क., 'सैषा या किल' ग. घ.
६. 'चसा' ग. घ. ङ. ७. 'खेदप्रमा' क. ग. ङ.

गान्धर्वीषु विवाहसाहसकथास्वर्थादुपस्थापिता-
स्वानन्दाश्रुकराम्बिताक्षमवशादाशां प्रकाशां ह्रिया ।
गूहन्ती पुलकप्रकम्पजडिमस्तम्भैः समुज्जृम्भितै-
राख्याता त्वपदानमक्षमतया निह्नोतुमह्नाय नः ॥ १६ ॥

( स्मृतिमभिनीय ) इयं किल पुरा भवत्या महामवसरसि तिरोहितया कार्यवशेन देवीहस्तं प्रापिता ।

लीलावती— ( लोकपावनीं दृष्ट्वा सहर्षाद्भुतं ) दिट्ठिआ जीवइ मंदाइणी । सा वि अज्ज एत्थ एव्व । ( दिष्ट्या जीवति मन्दाकिनी । साप्यद्यात्रैव । )

कलावती— ( साधिक्षेपं ) णं एसा लोअपावणी । [ नन्वेषा लोकपावनी । ]



लीलावती— अह्मो ! मंदाइणी एव्व एत्थ लोअपावणी त्ति ववहरीअदि । [ सहर्षविस्मयसंभ्रममुपसर्पति । ] ( अम्मो ! मन्दाकिन्येवात्र लोकपावनीति व्यवह्रियते । )

लोकपावनी— एह्येहि वत्से ! परिष्वज्य परिष्कुरु ममोत्सङ्गम् ।

इतरे— कथमनयोरातिचिरप्ररूढ इव प्रणयो लक्ष्यते ।

लीलावती— ( सविनयमुपसृत्य ) अय्ये मंदाइणि ! वंदामि । ( आर्ये मन्दाकिनि ! वन्दे । )

मन्दाकिनी— ( सानन्दं लीलावतीं गृहीत्वा परिष्वज्य )

अयि वत्से !

अपि लक्ष्मीसरस्वत्योरपि देवीश्रुवोः समा ।
वरं चोळेश्वरं प्राप्य वर्धस्व शरदां शतम् ॥ १७ ॥

( सर्वे विस्मयं नाटयन्ति । )

राजा— कथं भगवती लोकपावन्येव मन्दाकिनी ।

मेधावी— ( विमृश्य ) मरुद्वृधे ! तत्रभवत्याः संवरणे किं कारणम् ।

मरुद्वृधा— सुमेधस्सन्देश इत्येषा कथयति ।

[ प्रविश्य पटाक्षेपेण सुमेधाः ]



सुमेधाः— कस्तर्हि हेतुरत्रैवावास्थितौ ।

कमलकेतुः— (सविस्मयसंभ्रममुत्थाय प्रणम्य) कथमार्यः सुमेधाः ।

राजा— किमयमेवात्रभवतः पुरोधाः सुमेधाः ।

( सर्वे यथोचितं संगम्योपविशन्ति । )

कमलकेतुः— कथमिदानीमार्यस्यापि काकतालीयः समागमः ।

सुमेधाः—

आराद्धुं यामशयिषि निशामागता स्वप्नमस्यां
कामाक्षी मे स्वयमकथयत् काममाशूपनम्रम् ।

---

१. 'धाः । ) राजा - किम' क. ग. घ. ङ.

तद्विस्रम्भादुषसि च मिषन्नेव निष्क्रा[1]श्चिरागां
द्रष्टुं दिष्ट्या मधुरमधुना सङ्गतं [2]मङ्गलं वः ॥ १८ ॥

( सर्वे विस्मयन्ते । )

सुमेधाः - भगवति ! ननु पृच्छामि को हेतुरत्रैवावस्थिताविति।

मरुद्वृधा— दीपा[3]म्बाभक्तिः ।

मन्दाकिनी— ( सस्मितं ) वत्सयोरनुरागब[4]न्धासिद्धिरपि ।

कमलकेतुमेधाविनौ— ( सविस्मयं ) भगवत्यापि किमनयोश्चिकीर्षितं सङ्कटनम् ।



मन्दाकिनी— केन तर्हि ।

कमलकेतुमेधाविनौ— ( सकुतुकं ) कुतो हेतोः ।

मन्दाकिनी— भवतोरेव प्रार्थनात् ।

[ कमलकेतुमेधाविनौ सविमर्शं परस्परं मुखमवलोक[5]यन्तौ चिन्तां नाटयतः । ]

मन्दाकिनी— ( जनान्तिकं ) मरुद्वृधे ! ममाध्वश्रमादनुपगतया मैत्रायण्या महदुपकृतम् । यदिदानीम् उत्सवे वत्सयैव विदितास्मि ।

सुमेधाः— गहनोऽयं कथाभागः ।

---

१. ' ष्क्रां निरागां ' क.  २. ' सङ्गमं ' क.
३. ' पाम्बिकाभ ' क. ग. घ. ङ.  ४. ' बद्धसि ' क.
५. ' कमानौ चि ' ग. घ. ङ.

लीलावती– (सविस्मयं) भअवदि! तहिं महामहूसवसंमय- सम्मद्दे तह चिरं जळे मज्जिदा तत्तहोदी कहं जीविदवदी। (भगवति! तत्र महामहोत्सवसमयसम्मर्दे तथा चिरं जले मज्जिता तत्रभवती कथं जीवितवती।)

मरुद्वृधा— (जनान्तिकं) कथमिदानीमात्मानं गोपयिष्यसि।

मेधावी— (स्मृतिमभिनीय सविस्मयं) हन्त! अवधारितमि- दानीमत्यद्भुतं किमपि वस्तु।

[मन्दाकिनी स्मयते।]

मेधवी— (सहर्षं) देव! देव!

तावत् प्रतिज्ञावसरेऽधिकाशि
मया पुरा या शरणीकृतासीत्।
गङ्गेव सास्माननुगृह्णतीत्थ-
मङ्गीकृताङ्गीमवधारयैनाम्॥ १९॥

[राजा अद्भुतं रूपयति।]

कमलकेतुः— एवमेतत्।

मरुद्वृधा— साधु भोः साधु। अनुरूपमेव ते मेधावीति नामधेयम्।

---

१. 'सवसम्मद्दे' क. ग. घ. ङ. २. 'य) हन्त' ग.
३. 'देव! देव प्रतिज्ञा' क. ग. घ. ङ. ४. 'ङ्गीति विभावयैनाम्' क. ग. घ. ङ.
५. 'रूपमेधते मे' क.

मेधावी— ( सहर्षविस्मयसम्भ्रममुत्थाय शिरस्यञ्जलिं बद्ध्वा )

जय जननि लोकपावनि[1]
जय मन्दाकिनि जय त्रिपथिके[2]!
जय मृडजटाकुटीरे
जय जाह्नवि जय भगीरथतपःश्रीः! ॥ २१ ॥

मरुद्वृधा— (सबहुमानं)

शिरसा श्लाघते यस्मादेनां मन्दाकिनीं भवान्।
शम्बरारिजितं साक्षात् त्र्यम्बकं मन्महे ततः ॥ २२ ॥

मन्दाकिनी — (सहर्षं) फलाधिगमात् प्रकाशितामिदानीमखिलमपि संवरणम्। [सर्वे[3] सहर्षाद्भुतसम्भ्रमं भगवतीं साष्टाङ्गं प्रणमन्ति।]

राजा— ( सप्रश्रयमञ्जलिं बद्ध्वा )

धन्यमिदानीं भवनं
धन्यतरा वयममी सर्वे।
धन्यतमं कुलमपि मे
भवती दयते यदेवमव्याजम्॥ २३ ॥

कमलकेतुः— भगवति! भक्तिपरवशासि[4]।

लीलावती— (स्वगतम्) अम्मो! मंदाइणी देवदा। (अम्मो! मन्दाकिनी देवता।)

राजा— तर्हि मरुद्वृधापि कावेरी भवितुमर्हति।

---

1. ' पाविनि ' ग.    2. ' पथपथिके ' क. ग. घ. ङ.
3. [' सर्वे हर्ष ' क. ग. घ. ङ.    4. ' भक्तपर ' क. घ. ङ.

मन्दाकिनी— एवमेतत् ।

कमलकेतुः— अतः खलु भगवत्या मन्दाकिनीति नामधेयम् ।

राजा— लोकपावनीत्यपि ।

मेधावी— अत एव महामखसरसि सन्निधानम् ।

विदूषकः— सिवगंगाअं वि । (शिवगङ्गायामपि ।)

कलावती— सपंदं खु सव्वं करअळामळअं जादं ।
(साम्प्रतं खलु सर्वं करतलामलकं जातम् ।)



सुमेधाः— अहो महीयस्तव महाराज! भागधेयं यदेवं देवता एव स्वयमनुकम्पन्ते । भगवति! भवतीमेव पुरोधाय वत्सां दित्सति महाराजाय कमलकेतुः ।/

मन्दाकिनी— कस्तर्हि विलम्बः ।

कमलकेतुः— यावदनुमन्यसे ।

मन्दाकिनी— ननु वयं प्रदानावसरमेव प्रतीक्षामहे ।

कमलकेतुः— (लीलावतीं हस्ते गृहीत्वा राजानमुपेत्य)

भवत एकमहीपतनूभुवे
कुमुदकेतुसुतस्य ममात्मजाम् ।

परिददामि चिरादनुरागिणीं
परिगृहाण भवन्तु शुभानि ते ॥ २४ ॥

लीलावती— (राजानं दृष्ट्वा स्वगतम्) कहं से दंसणेण गुरुअणसण्णिहाणे वि विणअविरोहिणो विआरस्स गमणीअं ह्मि । (कथमस्य दर्शनेन गुरुजनसन्निधानेऽपि विनयविरोधिनो विकारस्य गमनीयास्मि ।)

राजा— (स्वगतं) हन्त सम्प्रति,

मूर्तामिव कीर्तिमिमां मङ्गलपारम्परीमिवाङ्गवतीम् ।
शृङ्गारदेवतामिव दृश्यां पश्यन्मनोभुवोऽस्मि वशे ॥ २५ ॥

विदूषकः— वअस्स णवो वरो विअ किं लज्जेसि । ता तुरिदं गह्ण पाणिं । (वयस्य नवो वर इव किं लज्जसे । तत् त्वरितं गृहाण पाणिम् ।)



मेधावी— दातुं ग्रहीतुमपि च स्वतन्त्रा स्वयमेव यत् ।
गङ्गानुकम्पते मूर्ता मङ्गलं किमतः परम् ॥ २६ ॥

तदविलम्बं परिणयतां देवः ।

[राजा साकूतं नेपथ्याभिमुखमवलोकते ।]

[प्रविश्य सत्वरं देवी मन्दाकिनीमुपसृत्य साविनयं]

देवी— भअवदि मंदाइणि पणमामि । (भगवति मन्दाकिनि! प्रणमामि ।)

मन्दाकिनी— (सबहुमानं)

आशास्यं तव किमितो यदयं दयितो विधेय एवास्ते ।
आशास्महे परमिदं सन्तु सुतास्ते महान्त इति ॥ २७ ॥

देवी— ( राजानमुपेत्य सहर्षस्मितं )

जा मह जीविअकलिआ जा मह सोहग्गसंतदिणिदाणं ।
तं एदं पणअवदिं परिणअ ळीळावदिं म एव्व किदे ॥ २८ ॥

( या मम जीवितकलिका या मम सौभाग्यसन्ततिनिदानम् ।
तामेतां प्रणयवतीं परिणय लीलावतीं म एव कृते ॥ )

राजा — ( स्वगतम् ) सम्प्रति,

भव हृदय ! निर्विशङ्कं भवदभिमतमेव निर्वहति देवी ।
सकृदपि दिदृक्षसे यां सैव गृहश्रीस्तवाद्य सम्पन्ना ॥ २९ ॥

( प्रकाशं सविनयं ) यद्यपि भवन्तः सर्वे प्रमाणं तदप्यम्बायाः परमनुमतिमाकाङ्क्षामि ।

मन्दाकिनी— ( सश्लाघं ) वत्स ! तवैव युक्तरूपमिदम् । यतः,

दित्सत्यसौ कमलकेतुरियं च धन्या
कन्या स्वयं घटयते तव सैव देवी ।
मेधाविनो रुचितमेतदपि प्रियं न-
स्तत्रापि ते गुरुजनानुमतिप्रतीक्षा ॥ ३० ॥

देवी— कहं दाणिं[1] वि विळंबो । ( कथमिदानीमपि विलम्बः । )

मन्दाकिनी— कमलावति ! मद्वचनादिहोपनय[2] दीपाम्बिकाम् ।

---

१. ' दाणिं विळं ' घ. ङ., २. ' दिहैवोप ' ग. घ. ङ.

कमलावती— तह। (तथा।) [इति निष्क्रम्य दीपाम्बा सह पुनः प्रविश्य] इदो इदो अय्या। (इत इत आर्या।)

दीपाम्बा— (सहर्षविस्मयं स्मृतिमभिनीय) अम्महे! कहं एसा भअवदी सअं देवदा[1] वि सही विअ तासु तासु कहासु अह्मारिसजणेहिं विणोदअंती आसी। (विमृश्य) अहव उवळाळणादो देवदावि सिसू विअ भत्तेहिं कीळेदि। (अम्महे! कथमेषा भगवती स्वयं देवतापि सखीव तासु तासु कथासु अस्मादृशजनैः विनोदयन्ती आसीत्। अथवा उपलाळनाद् देवतापि शिशुरिव भक्तैः क्रीडति।)

मन्दाकिनी— (दीपाम्बां[2] दृष्ट्वा सहर्षं) नन्वियं,

श्रद्धा वा [3]सिद्धचैतन्या भक्तिर्वा युक्तखेलना।
तपस्या वा तनुमती कृपा वा कृतजीविता॥ ३१॥

दीपाम्बा— (उपसृत्य) भअवदि! णमो दे। (भगवति! नमस्ते।)

मन्दाकिनी— (सबहुमानं)

वाचा सूनृतया धिया विमलया विख्यातया चर्यया
यः कृच्छ्रेण समार्जितस्त्रिकरणीमायास्य कालाद्बहोः।
आर्ये वीरसु! वीतरागमहिते दीपाम्बिके! सोऽधुना
धर्मस्ते समुपैधतां परिकरः स्वर्गापवर्गश्रियोः॥ ३२॥

राजा— अम्ब! प्रणमामि।

दीपाम्बा— वड्ढदु तुह भअवदीए पसादो। (वर्धतां तव भगवत्याः प्रसादः।)

---

१. 'दा पिअसही' क. २. 'पाम्बिकां' क. ३. 'सिद्धिचै' क. ग.
४. 'करस्पर्शांप' क. ५. 'दु कुळभअ' क.

मन्दाकिनी— अनुमन्यतां वत्सयोः पाणिग्रहणमहोत्सवम् अत्रभवती ।

दीपाम्बा— ( सविनयं ) देव्वदाणं तुह्माणं एव्व चिकीरिसिदे किं मह वि अणुमदी अवेक्खिदा । णहु चंदिआए पआसइदव्वे तारआएं पहा अणुरुंधिज्जइ । ( देवतानां युष्माकमेव चिकीर्षिते किं ममाप्यनुमतिरपेक्षिता । न खलु चन्द्रिकया प्रकाशयितव्ये तारकायाः प्रभा अनुरुध्यते । )

मन्दाकिनी— आर्ये! मा मैवम् ।

आचार्यादपि पितुरपि नृपतेरपि नैजदैवतादपि च ।
मातैव पुत्रकाणां महनीया भुवि बुभूषतां विदुषाम् ॥ ३३ ॥

दीपाम्बा— ( सहर्षं राजानमुपेत्य ) ता वच्छ महंतस्स मंगळस्स ळीळावदी तुए परिणीअदु । [ तद् वत्स! महतो मङ्गलस्य लीलावती त्वया परिणीयताम् । ]

राजा— ( सापत्रपं ) अनतिलङ्घनीयशासनाः खलु भवन्तः ।

[ इति लीलावत्याः पाणिं गृहीत्वा स्पर्शसुखमभिनयन् । ]

सुधासिन्धोरन्तर्नियतमहमासे यदधुना
जडिम्ना निस्सीम्ना जनितकरणानन्दगुरुणा ।
अतिस्तब्धान्यङ्गान्यहह! कियदास्पन्दितुमपि
प्रकल्पन्ते बद्धाविरळपुळकान्यानखशिखम् ॥ ३४ ॥

मन्दाकिनी— अनेन

---

१. 'एवि प' क. ग. घ. ङ.     २. 'नाः भव' घ. ङ.
३. 'प्रगल्भन्ते क. ग. घ. ङ.

मङ्गल्याभरणेनैनां कण्ठसीमन्यलंकुरु ।
भूषिता भूषयेदेषा येनात्मानं कुलं च नः ॥ ३५ ॥

[ इति कण्ठाभरणमर्पयति । राजा सप्रश्रयं गृहीत्वा लीलावत्याः कण्ठसीमन्यासञ्जयति । ]

[ नेपथ्ये मङ्गलमृदङ्गध्वनिः । सर्वे हर्षं नाटयन्ति । ]

कमलकेतुः— धन्यं स्वमधुना मन्ये
मेधावी— कृतकृत्योऽस्मि सम्प्रति ।
सुमेधाः— चरितार्थः श्रमो मेऽद्य
मन्दाकिनीमरुद्वृधे— निर्वृत्तं नः प्रयोजनम् ॥ ३६ ॥

विदूषकः— महाराअ ! णं दाणिं किदत्थोऽसि । ( महाराज ! नन्विदानीं कृतार्थोऽसि । )



राजा— किं न दुर्लभं भगवत्यैवानुकम्पनीयस्य मे ।

देवी— वहिणीए णिच्चसंजोएण णिव्वुदह्मि । ( भगिन्या नित्यसंयोगेन निर्वृतास्मि । )

कलावती— ( जनान्तिकं ) सहि सफळो दे मणोरहो । ( सखि ! सफलस्ते मनोरथः । )

लीलावती— ( सस्मितं ) तुह आआसो वि । ( तव आयासोऽपि । )

दीपाम्बा— ( सहर्षं ) अतक्किदोवणदं दाणिं अह्माणं मंगळं । ( अतर्कितोपनतमिदानीमस्माकं मङ्गलम् । )

[ प्रविश्य पटाक्षेपेण हृष्टः कञ्चुकी । ]

---

१. ' षा स्वमात्मा ' क. ग. घ. ङ.

कञ्चुकी— विजयतां देवः ।

[ सर्वे हर्षाद्भुतं नाटयन्तः पश्यन्ति । ]

कञ्चुकी— महाराज! विजयसूचकोऽयं सुमन्त्रस्य लेखः ।

कमलकेतुः— (सहर्षं) कथं सुमन्त्रस्य लेखः । (हस्तं प्रसारयति । कञ्चुकी लेखमर्पयति)

राजा— वाच्यतामविलम्बम् ।

कमलकेतुः— ( लेखमुन्मुच्य नाट्येन वाचयति । ) यथा–

स्वस्ति श्रीचोळसम्राजः सचिवाय महीयसे ।
अस्तु मेधाविने भद्रमत्रत्यमवगम्यताम् ॥ ३७ ॥



मन्दाकिनी— उचित एव सचिवेन सचिवाय सन्देशः ।

[1]मेधावी— ततस्ततः ।

कमलकेतुः—

डिल्ली पल्लीवदाक्रान्ता राज्यं प्राज्यं वशे कृतम् ।
अपि विश्वेश्वरः काश्यां विधिवत् सन्निधापितः ॥ ३८ ॥

इति ।

मन्दाकिनी— (सहर्षम्) हन्त ! महतः कालाद् भगवतो विश्वेश्वरस्य सम्प्रति वत्सप्रतापादेव प्रतिष्ठापनम् ।

[ पुनः सर्वे हर्षं नाटयन्ति । ]

---

१. 'सुमेधाः' क.

मन्दाकिनी— (स्मृतिमभिनीय) सम्राडिति शब्दश्रवणेन सम्प्रति मम किञ्चिच्चिकीर्षितम् ।

मेधावी— किमिव ।

मन्दाकिनी— साम्राज्याभिषेकः ।

मेधावी— (सहर्षम्) ननु प्राचामपि सम्राजामतिदुर्लभमिदं यदत्रभवं[1]त्येव भागीरथी स्वयमभिषेकाय यतते ।

राजा— (सानन्दं सप्रश्रयं च) भगवति मन्दाकिनि !

भगीरथर[2]थानुगा यदभवः पुरा भृत्यव-
त्र तेऽद्भुतमिदं चिरादिह तपस्यया[3]यास्यति ।
यदेवमपि मन्थरे मयि दयासुधासीदर्शी
विधाय च मनोरथानुगतिमादधासि स्वयम् ॥ ३९ ॥

मरुद्वृधा— महाराज ! देवीभ्यां भद्रपीठमध्यास्स्व ।

[ राजा देव्या लीलावत्या च भद्रपीठाधिवासं नाटयति । मन्दाकिनी-मरुद्वृधे महाराजकिरीटं स्पृशन्त्यौ सप्रणिधानं ]

भो भोः सरांसि सरितः ! पारावाराश्च सन्निधिं कुरुत ।
भोसलचोळमहीन्द्रोः साम्राज्यस्याभिषेकाय ॥ ४० ॥

राजा— (सं[4]विस्मयं) किमिदमद्भुतम् (सुधासिन्धोरित्यादि[5] पुनः पठति ।)

---

१. 'वत्यैव' क. ग. २. 'रथपथानु' क. ग. घ. ङ. ३. 'यास्यति' ग.
४. 'सस्मितं' ख. ५. 'दि पठ' क. ग. घ. ङ .

देव्यौ— अह्मो ! दाणिं अह्मे वि सुधाळहरीहिं ह्णाविदा विअ।
( अम्मो ! इदानीम् आवामपि सुधालहरीभिः स्नापिते इव । )

[ नेपथ्ये मृदङ्गध्वनिः । ]

मरुद्वृधा— आनन्दवल्ल्याः परदेवतायाः
सानन्दमेतन्नगरं त्वदीयम् ।
अध्यासितायाः परिपूजनाय
मध्याह्नतूर्यध्वनिरुज्जीहीते ॥ ४१ ॥

मन्दाकिनी —

भिन्दन् विन्ध्याचलादिप्रबलकुलगिरीन् सिन्धुबन्धून् समन्ता-
दुद्वेलानादधानः प्रतिदिशमुपयन्नद्वितीयः[1] प्रणादः ।
आब्रह्माण्डं प्रचण्डं मुखरयति धुवन्नंहसां संहतिं द्राङ्
मङ्गल्यस्ते मृदङ्गध्वनिरयमुदितः श्रीमदानन्दवल्ल्याः ॥ ४२ ॥

राजा— [ ध्यानन्नाटितकेन सानन्दं ]

परमशिवतः शङ्के पङ्केरुहप्रभवादिकं
जगदिदमभूदम्ब ! स्तम्बावधि त्वदपाङ्गितात् ।
महिमनि पुनः स्वस्मिन्नेव प्रतिष्ठितमैश्वरं
कथमितरथा सम्पद्येतागुणं गुणवन्महः ॥ ४३ ॥

अपि च, [ सपुलकोद्गमं ]

अन्तः सन्ततमन्तरायधुतये मन्दस्मितालङ्कृतं
ताटङ्कव्यतिषङ्गसुन्दरमपाङ्गालोकशृङ्गारितम् ।

---

१. ' यप्रणा ' ग.

मातः! प्रातरुदीत[1]सौरकिरणव्याकोचपङ्केरुह-
स्पर्धाबद्धकुतूहलं मनुमहे वक्त्रेन्दुबिम्बं तव ॥ ४४ ॥

मन्दाकिनी— वत्स! तदिदानीमनेनैव वैवाहिकवेषेण पट्ट-गजाधिरूढो राजवीथीं परिष्कुर्वाणः सफलयन् जननयनानि भगवतीमानन्दवल्लीं वन्दितुमर्हसि ।

राजा— यदाज्ञापयति भगवती ।

मन्दाकिनी— (सानन्दं)

अकृत कमलकेतुर्भक्तिमन्यादृशीं य-
न्मम शिशुरिव शिष्यैवापि लीलावती यत् ।
अवृणुत शरणं मां यच्च मेधाव्यपि प्रा-
गभजमिह चिरेणानृण्यमस्याखिलस्य ॥ ४५ ॥



कमलकेतुः— (सविस्मयं) भो भो महाराज!

उप[2]नमन्तु नयेन समन्ततो-
ऽप्युचितभूमणिभूषणसम्पदः ।
उपनमन्ति तव स्वयमेव ताः
किमिह चित्रमितो यदि देवताः ॥ ४६ ॥

सुमेधाः— अद्भुतां[3] किल भुवि सुलभतां देवतानाम् ।

राजा— (सश्लाघं)

विदुषि विश्वसनीयवचःक्रमे
विनयशालिनि विश्वहितैषिणि ।

१. 'सौर्यकिर' ग. घ. ङ. २. 'नयन्तु' क.
३. तानि किल' क. ग. घ. ङ.

स्वयमिदं वैरचेतसि भूभुजा-
मसुलभं किममात्यवरीयसि ॥ ४७ ॥

मेधावी— देव ! भगवतीप्रसादात् किं ते भूयः प्रियमुपहरामि ।

राजा— ( सानन्दं ) किमतः परं प्रियमस्ति मे । यतः,

श्रुतो धर्मः स्थैर्यं यवनगहनोन्माथविधिना
विवृद्धिं चाप्यर्थो गमित इह साम्राज्यधुरया ।
सकामः कामोऽसावपि कमलकेतोस्तनयया
त्रिवर्गश्रीरेषा ननु मम समग्रा विजयते ॥ ४८ ॥

तथापीदमस्तु— ( भरतवाक्यम् । )

श्रीचोळेशितुरस्य सन्ततिरियं सन्तायतां शाश्वती
श्रीरस्याश्च निरन्तर विजयतां साम्राज्यलाभोन्नता ।
सैषा पुष्यतु सन्ततं च विदुषो विज्ञानलक्ष्मीजुष-
स्ते चामी जगतीममुष्य यशसा विष्वक् परिष्कुर्वताम् ॥ ४९ ॥

अपि च,

पितेव लोकान् पिशुनाविधेयो
मृश्यान्महीपो मृदुना करेण ।
मातेव पुष्णातु मही च काले
पचेळिमानां प्रचयैः फलानाम् ॥ ५० ॥

[ निष्क्रान्ताः सर्वे । ]

सप्तमोऽङ्कः ॥*

---

१. ' पर ' क. ग. घ. २. ' व्रतौ ' क. ग. घ. ङ.

* " ङ्कः ॥ अद्भुतपञ्जर .... समाप्तम् ।
1026 ஞ பங்குனி மீ 12.உ எழுதி முடிஞ்சுது. " ग.

# अद्भुतपञ्जरनाटककथा

श्रीरङ्गशायियज्वेन्द्रविरचिता ।

अविज्ञातमहारम्भामविसंवादिनीं फलैः ।
नियतं शरणीकुर्मो नियतिं नीतिमेव वा ॥ १ ॥

श्रीरङ्गशायियज्वेन्द्रः पद्यैरनतिविस्तरैः ।
संगृह्णाति सुतस्नेहात् कथाम(1)द्भुतपञ्जरीम् ॥ २ ॥

अस्ति चोळाभिधो देशः स्वस्तिमान् दिक्षु विश्रुतः ।
उत्पत्तिं यत्र लिप्सन्ते दिक्पतिप्रमुखाः सुराः ॥ ३ ॥

अस्ति तञ्जापुरी तत्र कावेरीतीरसीमनि ।
तस्यामासीन्महीपालो निस्सीमगुणवारिधिः ॥ ४ ॥

एकराज इति ख्यातो भोसलान्वयभूषणः ।
तस्य भार्यानुरूपासीद् दीपाख्या कुलदीपिका ॥ ५ ॥

प्रभेव भास्वतो नित्यमुदितस्यानुरागिणी ।
एकोजेरस्य सचिवः काकोजिरभवत् सुधीः ॥ ६ ॥

शूरः शुचिः सत्यसन्धो मन्त्रज्ञस्तन्त्रसाधकः ।
अस्यैकधरणीनेतुरपत्यार्थे तपस्यतः ॥ ७ ॥

तनयः स्वयमेवाभूत् तरुणेन्दुशिखामणिः ।
म्लेच्छानुच्छेत्तुमच्छात्मा परवान् परिचर्यया ॥ ८ ॥

शतमप्यपराधानां सहतेऽपि रिपोरिति ।
अकरोत् सहनामानममुमेकमहीपतिः ॥ ९ ॥

चोळानरञ्जयद् बालः खेलन्नेव गुणैर्युतः ।
चोळराज इति ख्यातिमगमत् स नृपात्मजः ॥ १० ॥

अवतीर्णं हरं तूर्णमवधार्य महीतले ।
अम्बुजाक्षाम्बुजभवाववतीर्णौ नृपात् क्रमात् ॥ ११ ॥

शरभस्तुळजश्चेति नामाकार्षीत् तयोर्नृपः ।
(मात्सर्यनासत्य)कामा इव ते व्यवर्धन्त महर्द्धयः ॥ १२ ॥

तेषां ज्येष्ठस्तु चोळेन्द्रो धीरोदात्तगुणोत्तरः ।
पटुरार्जवसम्पन्नः प्रतिभावान् प्रियंवदः ॥ १३ ॥

महोदारो महोत्साहः सङ्गीतकविताप्रियः ।
तितिक्षुर्दक्षिणो वाग्मी विनीतो नीतिनीरधिः ॥ १४ ॥

रञ्जयन्नञ्जसा लोकं यौवराज्येऽभिषेचितः ।
उमा नामाभवत् तस्य देवी साक्षादुमैव सा ॥ १५ ॥

कल्याणगुणसम्पूर्णा कमनीयतराकृतिः
वशीकृतवती कान्तं तैस्तैरुचितविभ्रमैः ॥ १६ ॥

सोऽपि तैस्तैरुदाचारैर(ऋतूजऽतूतुष)दिमां प्रियः ।
तस्य नाविदितो भावस्तया तस्याश्च तेन वा ॥ १७ ॥

इत्थमत्यद्भुतं हृद्यं दाम्पत्यमभवत् तयोः ।
अस्य काकोजितनयस्त्र्यम्बकस्त्र्यम्बकोऽपरः ॥ १८ ॥

सर्वज्ञः सत्यसन्धश्च सचिवोऽप्युचितोऽभवत् ।
आश्चर्यबुद्धिर्मृदुगीराचाराणां प्रवर्तकः ॥ १९ ॥

मानी शूरो महोदारो प्रक्रान्तफलभाग् द्विजः ।
विद्वान् विद्वत्प्रियो यज्वा स्वामिभक्तो जितेन्द्रियः ॥ २० ॥

गुरुशुश्रूषुरुद्योगी गुणदोषविभागवान् ।
मेधावीति प्रथास्यासीत् सकृदुक्तार्थधारणात् ॥ २१ ॥

तमेनं पार्थिवो वृद्धस्तीर्थान्यटितुमुत्सुकः ।
अशक्तः स्वकृते शक्तं प्रैषयत् प्रीतिमान् धनैः ॥ २२ ॥

तीर्थानि पर्यटन्नेष सार्थैर(र्था ऽर्था)न् दिशन् बहून् ।
वाराणसीं पुरीं प्राप द्वारं मुक्तेरपावृतम् ॥ २३ ॥

तत्रैकराजसुहृदा राज्ञा कमलकेतुना ।
यथोचितोपचारं स प्रत्युद्गम्य प्रवेशितः ॥ २४ ॥

तेनानुयातः स्नातोऽयं भागीरथ्यां यथाविधि ।
पितॄणामकरोत् स्वेषां निवापाञ्जलिमञ्जसा ॥ २५ ॥

विश्वेश्वरविशालाक्ष्यौ वीक्ष्य ज्योतिर्मयाकृती ।
पूतः सोऽपूजयद् भक्त्या पूर्वैः पुण्यैः पचेलिमैः ॥ २६ ॥

ततश्च कथयन्तौ तौ विस्रम्भाद् विविधाः कथाः ।
(स्पर्द्धनी ऽस्वर्धुनी)रोधसि मिथो विश्वनाथस्य सन्निधौ ॥२७॥

आस्तां मेधाविकाशीशौ तस्मिन्नवसरे नृपः ।
चिराभिलषितं किञ्चित् सिषाधयिषुरात्मनः ॥ २८ ॥

मेधाविनमुपस्कृत्य प्रास्तावीत् प्राश्रितो वचः ।
दुर्घटं भवदन्येन कश्चिदर्थं निवेदये ॥ २९ ॥

कथश्चिद् घटनीयस्ते श्रेयसे यशसे च नः ।
इत्युक्तस्तेन मेधावी राजकार्यप्रमादयम् ॥ ३० ॥

प्रत्याह घटयामीति प्रत्याय्य शपथैर्नृपम् ।
ततः कमलकेतुस्तु कथामारभताद्भुताम् ॥ ३१ ॥

पुराहं निहितो राज्ये पित्रा कुमुदकेतुना ।
अनपत्यो विशालाक्षीमक्षीणनियमोऽभजम् ॥ ३२ ॥

सा दयालुः प्रसन्ना मे धन्यां कन्यामदान्मुदा ।
तस्यां हि जायमानायां सुमुहूर्ते तदाभवन् ॥ ३३ ॥

मङ्गलानि निमित्तानि सङ्गतानि समन्ततः ।
ततस्तज्जातकं चापि प्रेषितं युष्मदन्तिके ॥ ३४ ॥

तत्र ज्योतिर्विदः सर्वे शुभमाहुरिति श्रुतम् ।
लीलावतीति बालाया लीलाभिर्नाम चादधाम् ॥ ३५ ॥

एधमानाधुना सा मे चिन्तां सन्तानयत्यसौ ।
भवतो युवराजाय वत्सां दित्सामि तामिमाम् ॥ ३६ ॥

प्रतिज्ञामनवज्ञाय तत् त्वया संविधीयताम् ।
भाति मेऽपत्यसम्बन्धादेकराजानुबन्धिता ॥ ३७ ॥

यद्यप्येकमहीपालं प्रार्थयेतार्थमीदृशम् ।
तथापि युवराजस्ते मन्ये तन्नानुमन्यते ॥ ३८ ॥

उमानुपमसौन्दर्यसन्तानितनिजान्तरः ।
इत्यालपत्याविरासीद् भार्यास्य कमलावती ॥ ३९ ॥

करे गृहीत्वा कन्यां तां धन्यामन्यादृशीं गुणैः ।
अब्रवीदपि मेधाविन्! जानीषे किल तामुमाम् ॥ ४० ॥

मज्ज्येष्ठभगिनीपुत्रीं युवराजस्य वल्लभाम् ।
(यथा नद्यामुदस्तस्याश्च ममतात्मजा?
यथा तस्या मुदस्यां च तस्यां च मम चात्मजा) ॥ ४१ ॥

सपत्न्येव यथा प्रीता संविधेयं तथाथवा ।
इत्युक्तः सचिवस्ताभ्यामत्युत्कर्षस्य लिप्सया ॥ ४२ ॥

लक्षयन्नपि कन्याया लक्षणं चक्षुरादिषु ।
साम्राज्यसन्तती स्यातामस्याः पाणिं ग्रहीष्यतः ॥ ४३ ॥

इति निश्चित्य मत्यैव कथमप्यभ्युपागमत् ।
अब्रवीत् सस्मितं तौ च रभसादधुना मया ॥ ४४ ॥

रहस्येतत् प्रतिज्ञाय मनस्येवावतिष्ठताम् ।
इत्युदीर्योपकुर्या(प्रे?त्से)त्युत्थितः प्रार्थितप्रदाम् ॥ ४५ ॥

शरणीकृतवान् गङ्गां करणीयस्य सिद्धये ।
वसन्ननेहसं कञ्चिद् वाराणस्यामथाशृणोत् ॥ ४६ ॥

एकराजस्य वृत्तान्तं स दिष्टान्तमुपेयुषः ।
ततः प्रत्यागतस्तूर्णं युवराजं महीभुजम् ॥ ४७ ॥

भागीरथीयैरम्भोभिरभ्यषिञ्चद्यथाविधि ।
ततः स रञ्जयन् लोकान् मञ्जुलैरञ्जसा करैः ॥ ४८ ॥

प्राकाशयद् यथा चन्द्रः प्रत्यहं समुदित्वरः ।
आनमन्त च सामन्ताः फलवन्तश्च पादपाः ॥ ४९ ॥

उर्वरा सर्वतश्चोर्वी चोळराजेऽवति क्षितिम् ।
न्यस्तसर्वभरस्तेन मेधावी सन्नपि स्वयम् ॥ ५० ॥

नाकार्षीत् सर्षपप्रायमपि कृत्यममात्यराट् ।
प्रतिक्षणं प्रतिज्ञां स स्मरन्नपि जितस्मरः ॥ ५१ ॥

स्वाधीनवल्लभां देवीं वीक्ष्योदास्तैव दक्षिणः ।
ततो बहुतिथे काले गते चिन्तापरोऽभवत् ॥ ५२ ॥

बाला लीलावती दृष्टा पुरा पञ्चषवार्षिकी ।
गौरी पतिंवराद्य स्याद्विस्रब्धः स्याच्च तत्पिता ॥५३॥



अत्र प्रसक्तुमस्माभिरयमर्थो न शक्यते ।
प्रसक्तौ प्रतिबन्धः स्यात् प्रतिबन्धेऽनुपक्रमः ॥ ५४ ॥

तथा चास्य महान् दोषः प्रतिभाति प्रसञ्जने ।
अन्तःपुरमिदं कन्या सेवानीयेत तद्यदि ॥५५॥

राजा पश्येदवश्यं तामनुरज्येदपि स्वयम् ।
इत्थं मन्त्रयमाणेऽस्मिन्नर्थान्मैत्रायणी किल ॥५६॥

पुरा तीर्थाटनसखी पुनर्वाराणसीं प्रति ।
तं परिव्राजिका गन्तुमापृच्छत सुहृत्तमम् ॥५७॥

तामभाषत मेधावी प्रियं नः क्रियतामिदम् ।
त्वं वा लीलावतीं देशमिममानयतां द्रुतम् ॥५८॥

प्ररोचनाभिः कथमप्यस्ति तेन च नः फलम् ।
तथेति निर्गता सा च काशीमागत्य कन्यकाम् ॥ ५९ ॥

आश्रवामकरोन्नित्यमाश्रयन्ती सुतामिव ।
स्तुतिप्रसक्तौ देशानां तत्र तत्र कथान्तरे ॥ ६० ॥

तथा चोलान् विशिष्यास्तौद् यथा बाला दिदृक्षते ।
महामाघोत्सवं द्रष्टुं प्रातिष्ठन्त प्रजास्तदा ॥ ६१ ॥

सा चापृच्छत् स्वयं चोलान् यातुं पितरमादृता ।
रुचिं तां पितरौ तस्या रूढां व्याहन्तुमक्षमौ ॥ ६२ ॥

करग्रहोचिते काले घटयन्निकटागताम् ।
मेधावीत्यवधार्यापि प्रियां प्रैषयतां सुताम् ॥ ६३ ॥



अधिष्ठाप्य सुम(न्त्रस्तु?न्त्रं तु) पुरोधाय सुमेधसम् ।
मैत्रायणीं सहायं च कृत्वा कृच्छ्राद् व्यसर्जयत् ॥ ६४ ॥

तस्यां विनिर्गतायां च काशीं दिल्लीश्वरोऽरुधत् ।
ततः कमलकेतुस्तु चोलराजं व्यजिज्ञपत् ॥ ६५ ॥

वाचिकैरखिलोदन्तसूचकैः प्रणिधेर्मुखात् ।
वर्धमानमदस्तेन स्पर्धमानोऽब्दमास्त सः ॥ ६६ ॥

वार्तामेनां पथि श्रुत्वा चार्ता लीलावतीमुखा(मु?ः) ।
भक्तानामविनाभावो भर्त्रापद्युचितोऽद्य नः ॥ ६७ ॥

इत्यमात्यः स मध्येऽगात् सुमन्त्रोऽपि न्यवर्तत ।
पथ्येव मेलयन्नास्त महदाटविकं बलम् ॥ ६८ ॥

सुमेधास्तु पुरोधाः स ततो लीलावतीमुखान् ।
अनयद् विनयाम्भोधिः पुष्णन् मुष्णन् पथि श्रमम् ॥६९॥

अस्मिन्नवसरे गङ्गा महामघसरः प्रति ।
प्रस्थाय योगिनीरूपमास्थिता तैः सहाध्वनि ॥ ७० ॥

मिलिता ललितालापा सर्वज्ञा सर्वशक्तिभाक् ।
चिन्तयन्ती चिरं न्य(स्ता?स्तं) भारं मेधाविनात्मनि ॥७१॥

आवर्जयदिमान् सर्वानार्जवादूर्जितव्रता ।
लीलावती मातरीव तस्यां व्यस्रम्भताचिरात् ॥ ७२ ॥

तस्यां सञ्जातविस्रम्भां मैत्रायण्यवलोक्य ताम् ।
प्रारूरुचमहं बालां चोलानामवलोकने ॥ ७३ ॥



सङ्कटेरमुमी याता स्वयं मेधाविनोत्सवे ।
इत्यालोच्य तदापृच्छ्य तां जगन्नाथमन्वगात् ॥ ७४ ॥

अपि लीलावती पित्रोर्नास्मरद् योगिनीयुता ।
तस्यै मन्दाकिनी मन्दं मन्दमानन्दिनीः कथाः ॥ ७५ ॥

कथयन्तीतिवृत्तानि गान्धर्वोद्वाहवन्ति सा ।
प्रास्तावीन्मुहुरस्तावीत् प्रसङ्गाच्चोलभूभुजम् ॥ ७६ ॥

सा हि तं साधु जानीते दृष्ट्वा प्रतिमहामघम् ।
प्राक् प्रद्युम्नप्रभावत्योर्बाला चोषानिरुद्धयोः ॥ ७७ ॥

शकुन्तलापौरवयो रुक्मिणीकृष्णयोरपि ।
श्रुत्वा विवाहं गान्धर्वमपि पित्राद्यसम्मतौ ॥ ७८ ॥

यूना स्वस्यापि गुरुणा युक्तरूपममन्यत ।
उद्वाहे स्वस्य नाजानादुद्यमं सा पितुर्यतः ॥ ७९ ॥

इत्थं पथि व्रजन्ती सा साक्षात् काशीत आगतात् ।
अत्याहितं पितुः श्रुत्वा नित्यं दुरमनायत ॥ ८० ॥

ततः काञ्चीपुरं प्राप्तः सुमेधास्तामथाभ्यधात् ।
नास्माभिरीदृशदशैर्गन्तुं चोलेषु युज्यते ॥ ८१ ॥

चर्ययाश्चर्यया वाचा कामाक्षीं प्रीणयन्नहम् ।
दैवात् कमलकेतोर्द्रागनुकूलयितुं यते ॥ ८२ ॥

तत्तादृशाय शिष्याय राज्ञे कमलकेतवे ।
समये नोपकुर्यां चेत् स मयेह किमीहताम् ॥ ८३ ॥



वत्सेयमुत्सुका पित्रोरुत्सवायैव नीयताम् ।
भवत्यावश्यमेतव्यं यतः प्रतिमहामघम् ॥ ८४ ॥

इतराविदिते तूर्णमिहैवागच्छतं युवाम् ।
ततश्चोलानुपागम्य कावेरीमवगाह्य च ॥ ८५ ॥

कुम्भकोणपुरं प्राप जम्भवैरिपुरोपमम् ।
तत्र दिग्भ्यो विदिग्भ्यश्च द्वीपेभ्यश्चागताः प्रजाः ॥ ८६ ॥

अवालोकत लीलावत्यद्भुतं चोत्सवं तदा ।
सिंहराशिगते जीवे माघ्यां वृषभलग्नके ॥ ८७ ॥

आविरास्तां समस्तानामाब्रह्मस्तम्बमाः ! पुरः ।
आरुह्य वृषभं कुम्भीश्वरमङ्गलनायिके ॥ ८८ ॥

अस्मिन्नवसरे देवा विस्मृतादूरमानसाः(?) ।
विस्मितो विभवश्चोलः सस्मितः सानुजोऽन्वगात् ॥ ८९ ॥

देवीदीपाम्बिकामुख्यास्तं यथोचितमन्वयुः ।
आपूर्यत पुरी लोकैरुत्सवालोकनोत्सुकैः ॥ ९० ॥

विमर्दोऽभूत् तथा स्वेदैर्यथा कर्दमिता मही ।
ततः सा योगिनी (तूर्णम)तिसन्धाय रक्षिणः ॥ ९१ ॥

वत्सामुत्सारिता कृत्स्नान् विविक्ते (मा?ता)मतिष्ठिपत् ।
निर्मक्षिकीकृते देवीस्नानघट्टे परिष्कृते ॥ ९२ ॥

ततो मन्दाकिनी मन्दमचिन्तयदनन्तरम् ।
सापत्न्यमस्याः सा देवी स्वयं नैवानुमंस्यते ॥ ९३ ॥

कथं मेधाविकाशीशौ निर्वहतां मनोरथम् ।
उपायः स्वयमेषैव देवी नेया कथञ्चन ॥ ९४ ॥

स राजान्तःपुरे बालामालोकेत तदा स्वयम् ।
हृष्यंश्च पगृह्णीददूष्येद् देवी ततश्चिरम् ॥(?) ९५ ॥

संविदध्यात् स मेधावी साधु चास्माभिरेधितः ॥
इत्यालोच्यावदद् बालामत्यादृत्य सुतामिव ॥ ९६ ॥

अत्याहितेऽद्य पित्रादेर्नैकाकिन्यास्तवोचितः ।
प्रकाशश्चोलराजीयेष्वतो न स्थेयमत्र नः ॥ ९७ ॥

भगवांश्चागतस्तूर्णमवगाहे सरस्यहम् ।
पश्चादवतरेन्मन्दमित्युक्त्वावतरन्त्यसौ ॥ ९८ ॥

स्खलन्तीव निपत्याप्सु न्यमाङ्क्षीदेव योगिनी ।
हा हेति यावदाहेयं बाला तावत् किलाखिलैः ॥ ९९ ॥

मानवैः सरसी पूर्णा मज्जद्भिर्निर्जरैरपि ।
तस्मिन्नवसरे देवी स्नातुमत्रागता द्रुतम् ॥ १०० ॥

सम्भ्रान्तामवलोक्यैनामपृच्छत् कुलनामनी ।
जानत्यप्यात्मनो देवीं ज्यायसीं भगिनीं तु सा ॥ १०१ ॥

नाचष्ट भूयः पृष्टापि गभीरा सम्भ्रमादपि ।
सा पितृभ्यां सुमन्त्रेण मैत्रायण्या सुमेधसा ॥ १०२ ॥

मन्दाकिन्या च विश्लिष्टा कन्या कष्टां दशामगात् ।
देवी तु दिव्यसौन्दर्यान्निमित्तान्मङ्गलादपि ॥ १०३ ॥



आकस्मिकस्नेहबन्धादादत्त स्वसखीं प्रियाम् ।
स्नापयित्वा सरस्येनां रहस्येव प्रसाध्य च ॥ १०४ ॥

शिबिकामधिरोप्यैनां शीघ्रं भवनमानयत् ।
इयं सारसिका नाम यतः सरस आगता ॥ १०५ ॥

नैनां पश्येद् यथा राजा तथा कार्यं त्वयेत्यपि ।
कलावत्या वशे कन्या कृता बहुमता सती ॥ १०६ ॥

ततः स्नातोत्थितां गङ्गां योगिनीरूपमास्थिताम् ।
कावेर्यपि च तद्रूपा प्रियामन्वसरत् सखीम् ॥ १०७ ॥

मरुद्वृधेति नामाधादस्या मन्दाकिनी स्वयम् ।
लोकपावित्र्यभून्नाम्ना लोकावर्जनकोविदा ॥ १०८ ॥

सैषा काषायसंवीता जटिला कुटिलेतरा ।
श्रद्धा वा सिद्धचैतन्या भक्तिर्वा युक्तखेलना ॥ १०९ ॥

तपस्या वा तनुमती कृपा वा कृतविग्रहा ।
त्रयीवानैर्तीराधीना त्रेतेव ज्वलदाकृतिः ॥ ११० ॥

त्रिस्रोता इव लोकानां पावनी लोकपाविनी ।
मरुद्वृधादत्तहस्ता महनीयपरिच्छदा ॥ १११ ॥

सपर्येव विनिर्याता सामग्रीपरिबृंहिता ।
स्तुवती मधुरोदारैः सा च त्र्यन्तगैः पदैः ॥ ११२ ॥

सायं मेधाविना दृष्टा सादरं (चाविपादिकाऽचाभिवादिता)
चोलराजोऽपि मिलितो देवीदीपाम्बिकान्वितः ॥ ११३ ॥

पृष्टा मेधाविना केयं कल्याणीति मरुद्वृधा ।
आचष्टावितथं योगिरितिमव्यनुमन्धती(?) ॥ ११४ ॥

एषा वाराणसीवासा योगिनी लोकपावनी ।
सर्वदा पर्वतारण्यनानाजनपदास्पदा ॥ ११५ ॥

न ग्रामं नगरं वापि परिशीलयते भृशम् ।
प्रकृत्या शीतला शुद्धा सिद्धियोगा हिमाचले ॥ ११६ ॥

आकाशयानं कायानां व्यूहमप्याश्रयेदियम् ।
जानीते भाव्यतीते च जगतोऽस्य समाधिना ॥ ११७ ॥

किमत्र बहुनाप्येनां शिरसा श्लाघते शिवः ।
अहं तु चोलेष्वत्रैव सञ्चरास्मीति यच्चिरात् ॥ ११८ ॥

प्रतिवर्षमियं भानौ तुलागे समियान्मया ।
सर्वतीर्थावगाढा चाभ्येति प्रतिमहामघम् ॥ ११९ ॥

यद्वृषभलग्नं च मज्जत्यप्सु समाधिना ।
इत्याश्चर्यं ततश्चर्यां तस्याश्च सहबान्धवः(?) ॥ १२० ॥

श्रेयस्कामो नमस्कृत्य पुरस्कृत्य यथाविधि ।
अनयद् विनयेनैनां कृच्छ्रात् तञ्जापुरीं निजाम् ॥ १२१ ॥

प्रावेशयच्च प्राकारं मेधावी धाम चानयत् ।
ततोऽग्निशरणे तस्य शरणे विदुषां सताम् ॥ १२२ ॥

आकर्णयन्ती मीमांसामानन्दाद् ब्रह्मकर्मणोः ।
त्रेतेव पूज्यमानेयमनयद् वासरान् बहून् ॥ १२३ ॥

राज्ञा भवनमानीता साज्ञानित्युनुनीय च(?)
अन्वगृह्णाज्जनं कृत्स्नं किंन्वभून्मानुवर्तिनाम् ॥ १२४ ॥

ततः प्रतिष्ठमानां तां काशी......योगिनीम् ।
न्यरुणत् करुणासान्द्रा दीपाम्बा भक्तिगौरवात् ॥ १२५ ॥

विविक्ते फुल्लकुटजे शिवगङ्गान्तिकोटजे ।
वसन्ती वन्दमाना सा त्रिसन्ध्यं बृहदीश्वरम् ॥ १२६ ॥

.........नाथैव समाधिं पर्यशीलयत् ।
मरुद्वृधा राजकुलमागच्छेदन्तरान्तरा ॥ १२७ ॥

अपृच्छद् यवनोच्छेदं मेधावी लोकपाविनीम् ।
सा पञ्चमे ............ मेधाविनमभाषत ॥ १२८ ॥

राजापि तदुपश्रुत्य राज्ञे कमलकेतवे ।
वीरं विजयसेनं स्वं सहायं प्रैषयद् बलैः ॥ १२९ ॥

स समेतः सुमन्त्रेण (रा)जदुर्गविनिर्गतम् ।
काश्यां कमलकेतुस्तु निरुद्धा यवनैर्भृशम् ॥ १३० ॥

संवत्सरात् परं दीनः सहायाभावनिश्चयात् ।
निरगान्नगराद्वीरो निर्धारितनिजात्ययम् ॥ १३१ ॥

आश्वारूढो बलैर्मौलैर्म्लेच्छानेकोऽसिनाच्छिनत् ।
म्लेच्छसेनापतिस्तं द्रागावृणोदखिलैर्बलैः ॥ १३२ ॥

तस्मिन्नवसरे दिष्ट्या मिलिताश्चो(ल)सैनिकाः ।
तदीयस्य प्रतापाग्नेर्दाढ्यं यत्किञ्चिदिच्छतः ॥ १३३ ॥



अनीकेन तुलुष्काणामथ शुष्केन्धनायितम् ।
विघ्नन् विजयसेनः स नियु .... .... ॥ १३४ ॥

(आया)न्तं हन्त दिल्लीशं जीवग्राहं गृहीतवान् ।
काशीशेनापि मथितः प्रथितः पृतनापतिः ॥ १३५ ॥

पलायत म्लेच्छकुलं पालकध्वंसनाकुलम् ।
... ... ... न सुमन्त्रेण च सङ्गतः ॥ १३६ ॥

काशीशः प्राहिणोत् पत्रं चोलराजाय सत्वरम् ।
महामघगता सा मे पुत्रिका तत्र रक्ष्यताम् ॥ १३७ ॥

अहमेष्यामि तत्रैव........तव्य.......शास्त्विति ।
चोलेशश्चान्वशादेनं विचित्य निखिलां महीम् ॥ १३८ ॥

अत्र ते नागता पुत्रीत्यपि कर्तव्यमादिशत् ।
निग्रहश्च तुलुष्काणामिन्द्रप्रस्थस्य चाक्रमम् ॥ १३९ ॥

प्रतिष्ठा विश्वनाथस्याप्या(शु?शु) लेखमुखान्मुदा ।
मेधाव्य(बोधय) द्व देव्यै (तु?) तल्लीलावत्यदर्शनम् ॥ १४० ॥

दूयेत तस्यास्तां देवी दुर्दशां शृणुयाद्यदि ।
सा तु तां निर्गतां बालां (मा)र्गदीनाममन्यत ॥ १४१ ॥

एवं सति स मेधावी प्रतिज्ञाभङ्गशङ्कितः ।
चिन्तयन्नास्त हन्ताथ तमासीद् मरुद्वृधा ॥ १४२ ॥

तया सङ्कथयत्यस्मिन् देव्याश्चन्द्रकला सखी ।
आ ............... वरात्रे किलात्र नः ॥ १४३ ॥



चण्डिकार्चनसामग्री द्विगुणा कल्प्यतामिति ।
मन्त्रिणे वक्तुकामा तदपृच्छत् तं मरुद्वृधा ॥ १४४ ॥

अपि सारसिका देवी गौरीं पूजयति ........ ।
...... सारसिकापीति देव्यपीत्यब्रवीत् सखी ॥ १४५ ॥

न हि मेधाविनः कन्यां गूहनीयाममन्यत ।
राजकार्यपरस्यास्य तदज्ञानेन कोविदः ॥ १४६ ॥

तज्ज्ञानेनापि को दोषः ........ ।
ततस्तदुभ्युपेत्यैव सस्मिता योगिनी गता ॥ १४७ ॥

अपीति शब्दं प्रश्नार्थं योगिन्युक्तं समुच्चये ।
भ्राम्यन्ती प्रत्यवादीत् तामित्यमात्यः स्वयं विदन् ॥ १४८ ॥

जानान्निव . . . . . . . . . . . . . . . . ।
. . . . . . . . . . . . . . . . . . . . . . . ॥ १४९ ॥

(ग)त्वा प्रणन्तुं पितरं स्वकीयं
समेयुषः शक्तिधरं स्वपाद्धात्(?) ।
भित्त्वा हि मालासु समाहितासु
देव्या दृढाश्लिष्टवपुः शिवोऽव्यात् ॥ १५० ॥

---



# श्लोकानुक्रमणी ।

## IN THE PRESS

1. Bhojanakutūhala (Dietetics) of Raghunātha. Part. II.
2. Sarasvatīkaṇṭhābharaṇa (Grammar) of Bhoja with the commentary Hṛdayahāriṇī by Daṇḍantāhanārāyaṇa Part. V.
3. Prakriyāsarvasva (Grammar) by Nārāyaṇa Bhaṭṭa. Part. V.
4. Mīmāṁsāślokavārtika of Kumārilabhaṭṭa with the commentary Kāśikā by Sucaritamiśra. Part. IV.
5. Aṅkaṇaśāstra. (Jyotiṣa)
6. Bhāgavatacampū of Rāmapāṇivāda.
7. Karaṇottama (Jyotiṣa) of Acyuta with commentary.



## READY FOR THE PRESS.

1. Aitareyāraṇyaka (Veda) with the commentary Mokṣapradā of Ṣaḍguruśiṣya.
2. Kalaśacandrikā. (Tantra).
3. Twenty Prabandhas (Campus) of Nārāyaṇa Bhaṭṭa.